श्रीः ।

श्रीनारायणतीर्थविरचिता

# भक्तिचन्द्रिका

( शाण्डिल्यसूत्रव्याख्या )

काशीस्थराजकीयसंस्कृतपाठशालाध्यापकेन
व्याकरणाचार्यफडके-इत्युपाव्हानन्तशास्त्रिणा
भूमिकादिभिः परिष्कृत्य संशोधिता

---

The

# BHAKTI CANDRIKĀ

( Commentary on Śāndilya Sūtra

of

Nārāyaṇa Tīrtha

Edited with Introduction etc.

by

Pt. Anant Shastri Phadke, Vyākarṇāchārya
Professor, Govt. Sanskrit College,
Benares.

---

1938

# FOREWORD

The following pages contain the Second Part of the Bhakti-Candrikā Part I already published, as No. 9 of this Series, in 1924. It is a pity that, like the first part, it is also based upon a single manuscript already described in the Prefatory Note to that part. In view of this paucity of manuscript material there is nothing strange if the edited text of the commentary published herewith is not as thoroughly satisfactory as one would like it to be. Still it is evident that the learned editor, who has already edited several works on Bhakti in the same series and is familiar with the Bhakti literature, has spared no pains in preparing the present edition and for this he deserves our hearty congratulations. The several Appendices, including the list of Corrigenda, he has added, at my suggestion, towards the end of the book, with reference to the whole work, have greatly enhanced the usefulness of the edition.

It is not necessary to point out here the importance of the Bhakti-Candrikā. It is more eloborate than any other known commentary on the Śāṇḍilya-Sūtras. Its every page bears a stamp of the vast learning of its versatile author. But it would seem that in spite of these facts it cannot outweigh the

importance of Svapneśvara's commentary ( called Bhāṣya ). The latter is the earliest known commentary on the same Sūtras and probably for the same reason, to my mind, offers more natural explanation of many a Sūtra. This is especially true, I think, in the case of those Sūtras in which old ancient texts are evidently referred to; cp., for instance, Sūtras 14, 23 and 84. There is also every probability that in such cases the older commentary is based on some tradition directly coming from the author of the Sūtras himself.

It may also be mentioned here that, apart from the differences in interpretation, the Bhāṣya and the Bhakti-Candrikā also differ, not only as regards the readings of many Sūtras, but also as regards the total number of the same. It will not be out of place here to add a list of all such differences. In some cases obviously the difference must be due to the carelessness on the part of scribes. In other cases the differences are real as would appear from a comparison of both the commentaries.

| Svapneśvara's Bhāṣya[1] | | Bhakti-Candrikā | |
|---|---|---|---|
| अत एव | ८ | अत एव च | १।१।८ |
| प्रकरणाच्च | ११ | प्रकरणात् | १।२।२ |
| तद्भावाद् | १४ | तद्भावाद् | १।२।५ |
| अभिज्ञप्त्या | १५ | अभिज्ञया | १।२।६ |

1. For the Bhāṣya I have utilized the Bib. Indica edition.

| Svapneśvara's Bhāṣya | Bhakti-Candrikā | |
|---|---|---|
| प्रागुक्तं च १६ | The Sūtra is omitted | |
| The Sūtra is omitted | भक्तिः प्रमेया श्रुतिभ्यः | १।२।९ |
| Ditto | पुराणेतिहा- साभ्यां चेति | १।२।१० |
| Ditto | पृथुध्रुवप्रह्लादाम्बरीष- शुकसनकनारद- भजनाचाराच्च | १।२।११ |
| प्रयाजवत् १९ | प्रयाजादिवत् ( But cf. Comm. ) | १।२।१२ |
| ऐश्वर्यपरां २९ | ऐश्वर्यपदां | २।१।३ |
| आत्मैकपरां ३० | आत्मैकपदां | २।१।४ |
| उभयपरां ३१ | उभयपदां | २।१।५ |
| अभिज्ञानवद् ३२ ( But cf. Bhāṣya ). | प्रत्यभिज्ञावद् | २।१।६ |
| परैश्वर्यम् ३५ | परमैश्वर्यम् | २।१।९ |
| सर्वानृते ३६ | सर्वामृते | २।१।१० |
| अनुवर्तमानात् ३७ | अनुवर्तनात् | २।१।११ |
| वेद्यम् ४२ | चेत्यम् | २।१।१६ |
| तत्परिशुद्धिश्च ४३ | तत्परिशुद्धिस्तु | २।१।१७ |
| चाजन्मशब्दात् ४७ | चाजन्मने शब्दात् | २।१।२१ |
| तस्य हि ४९ | हि तस्य | २।१।२३ |
| उपास्यादौ ५८ | उपास्त्यादौ | २।२।३ |
| अत्राङ्गप्रयोगानां ६२ ( -णां Bombay edition ) | अप्रयोगानां | २।२।७ |
| इतरेषां ६६ | इतरेषां तु | २।२।११ |
| स्वयमर्पितं ६८ | स्वयमप्यर्पितं | २।२।१३ |

| Svapneśvara's Bhāṣya | Bhakti-Candrikā |
|---|---|
| निमित्तगुणाव्यपेक्षणात् ६९ ( According to Cowell गुणा- is a misprint ) | निमित्तगुणव्यपेक्षणात् २।२।१४ |
| श्रेयस्यः ७१ | ताः श्रेयस्यः २।२।१६ |
| गौणं ७२ | गौण- २।२।१७ |
| अननुष्ठितिर् ७५ | अनुष्ठितिर् २।२।२० ( But cf. Comm.) |
| आप्रयाणम् ५७ ( Cowell corrects to आप्रायणम् ) | आप्रायणम् २।२।२० |
| भक्ताधिकारे ७६ | भक्त्यधिकारे २।२।२१ |
| उत्क्रान्तिस्मृति-८१ ( See however Cowell's note ) | उत्क्रान्ति- २।२।२६ |
| सैकान्तभावो ८३ | सैकान्तभावे २।२।२८ |
| अस्माद् ९१ | ऽस्मादिति ३।१।७ |
| तथा ९२ | तथा हि ३।१।८ |
| -बुद्धिर्बुद्धिलयाद् ९६ ( Cf. Cowell's note ) | -बुद्धिलयाद् ३।२।४ |
| अभक्तिः ९८ | अभक्तेः ३।२।६ |
| कारणासिद्धेः ९८ ( Cf. Cowell's note ) | करणत्वासिद्धेः ३।२।६ |
| अविस्तरोभावा विकाराः १०० ( Cowell corrects according to several Mss. to आविस्तिरोभावा विकाराः ) | आविस्तिरोभाव-विकाशाः (?) ३।२।८ |

Sarasvati Bhavana,
Benares.
18th June, 1938

M. D. Shastri,
Principal, Sanskrit College,
Benares

श्रीः ।

# किञ्चित्प्रास्ताविकम् ।

अथेदं मुद्राप्य प्रकाश्यते भक्तिचन्द्रिकासंज्ञकं भक्तिशास्त्रीयं ग्रन्थरत्नम् । नवविधश्रवणादिभक्तिबोधकेभ्यः-'तमुस्तोतारः' इत्यादि ऋग्वेदमन्त्रेभ्यः[1], जयासंहिता[2]ब्रह्मवैवर्त[3]पुराणालोचनतः काण्वीशाखातः, शाण्डिल्यसंहितालोचनेन[4] तैत्तिरीय-बौधायनशाखातः सूक्ष्मरूपेण विनिर्गतं भक्तिस्वरूपमिति ज्ञातुं शक्यते । भक्तेः शास्त्ररूपं तु श्रीनारदशाण्डिल्यमहर्षिभिः प्रकटीकृतमिति तेषां सूत्रालोचनतः स्फुटीभवति । अनयोः सूत्रावलोकनेन भक्तिशास्त्रविषये पूर्वमासन्नेकऋषिमुनिप्रणीता अनेकमतबोधका ग्रन्था[5] इति निश्चेतुं शक्यते, परन्त्वस्माकं सर्वथा दौर्भाग्येण तेषामेकोऽप्यधुना नोपलभ्यते ।

---

१ अस्मिन् विषये भक्तिनिर्णयः, भगवन्नाममाहात्म्यसंग्रहः, प्रकृतग्रन्थश्च ( पृ० ७७-८२ ) द्रष्टव्यः ।

२ काण्वीं शाखामधीयानौ वौपगायनकौशिकौ ।
प्रपत्तिशास्त्रनिष्णातौ स्वनिष्ठानिष्ठितावुभौ ॥ ( ज० सं० प० १ )

३ अत्र राधिकाया आख्यानं कण्वशाखायामस्तीति प्रतिपादितम् । ( ८२-४८ )

४ तैत्तिरीया जगुश्चोर्द्ध्वं पुण्ड्रं वै श्रौतभस्मना ।
वर्णाश्रमाचारवता धार्या तुलसिमालिका
शिखोपवीतवन्नित्या जगावाथर्वणश्रुतिः ॥ ( शां० अं० ३-४ )
पादोदकं हरेः पेयं पूजान्तेऽपि दिने दिने ।
सर्वतीर्थसमं तद्धि प्राह बौधायनश्रुतिः ॥ ( शां० अं० ३-८ )
उरुक्रमस्य पादाब्जपाथो यो न पिबेन्नरः ।
विष्णोर्लोकं स न वसेदिति ऋक् शाश्वती श्रुता ॥ ( शां० अं० ३-८ )

५ नारदसूत्राणि—१६, १७, १८, १९, ३०, ७६, ८३, द्रष्टव्यानि ।
तथा शाण्डिल्यप्रणीतानि—२-१-३, ४, ६ द्रष्टव्यानि ।

श्रीमहर्षिनारदेन भक्तिविषये चतुरशीति सूत्राणि, तथा श्रीमहर्षिशाण्डिल्येन शतं द्व्यधिकशतं वा सूत्राणि[1] प्रणीतानि। श्रीनारदमहर्षिरचितसूत्रापेक्षया श्रीशाण्डिल्यमहर्षिविरचितसूत्राण्येव भक्तिविषयकसकलविचारकरणेन मन्दजनानुग्राहकाणीति सुप्रथितं तद्विदाम्। अत एवेमान्येव भाष्यकारादिभिरनेकविद्वच्छ्रेष्ठैर्भाष्यव्याख्यादिभिर्भूषितानीति[2] सुप्रसिद्धम्। अत्र मोक्षोपायत्वेन प्रसिद्धानां ज्ञान-भक्ति-कर्म-योगोपायानां गौणमुख्यभावं सयुक्तिकं विचार्य भक्तेरेव सर्वेषामुपायानां श्रैष्ठ्यं प्रतिपादितम्। सर्वथा वैदिककर्मविरोधिनि वैषयिकानेकाशास्त्रीयसुखप्रदायके ज्ञानशत्रुभूते शरीरन्द्रेयियमनोदुर्बलत्वेनाशक्ययोगे कराले कलिकाले मन्दमतीनां सम्पूर्णं कर्मादिकं कर्तुमसमर्थानां कृते विना भक्तिं नान्य उपायश्चित्तशान्तये परसुखप्राप्त्यै च समर्थः। सोऽप्युपायः स्वस्ववर्णाश्रमोचितकर्मयुत एव सफलीभवतीति विदितचरमेव भक्तिशास्त्रविदाम्। अस्य भक्तिप्रतिपादकसूत्रजातस्य सम्यगर्थप्रतिपादकस्य सर्वभक्तिशास्त्रीयटीकापेक्षया प्राचीनस्य श्रीस्वप्नेश्वरकृतभाष्यस्यार्थं विशदयन्त्यपेक्षितसकलार्थसंपादयन्त्येषा भक्तिचन्द्रिकैव साधयति भक्तिरहस्यजिज्ञासूनां स्वाभिप्रेतं सकलमर्थजातम्। नैषा टीका विद्यमानचैतन्यवाल्लभरामानुजीयमाध्वादिमतसम्बद्धभक्तिशास्त्रग्रन्थवत्तत्तन्मतसम्बद्धभक्तिस्वरूपप्रतिपादयित्री, नापि सकलतत्तन्मतस्थभक्तिस्वरूपस्यैकान्ततो विरोधिनी, अपि तु श्रीमधुसूदनसरस्वतीविरचितभक्तिरसायनवद्विशुद्धभक्तिप्रवाहप्रतिपादयित्रीति ग्रन्थस्थविषयावलोकनेनैव स्फुटं भवेत्।

भक्तिचन्द्रिकावलोकनतो ज्ञायन्ते भक्तिसूत्राणामेतेषामासन्ननेकाः टीका इति। यतस्तत्तत्स्थलेषु ग्रन्थकृता श्रीनारायणतीर्थेन क्वचित्

---

१ इदमत्रत्यसूत्रसङ्ख्याबोधकपरिशिष्टतो ज्ञेयम्।

२ श्रीस्वप्नेश्वरकृतभाष्यम्, श्रीभवदेवमिश्रकृतमभिनवभाष्यम्, श्रीनारायणतीर्थकृता भक्तिचन्द्रिकाटीका भक्त्यधिकरणमालेतिसर्वं चैतस्य सूत्रजातस्य सम्बन्धि।

सूत्रव्याख्यानान्तराणि प्रदर्श्य तेषां साधुत्वादिकं विवेचितम्[1]। विशेषतः १०१ पृष्ठे श्रीरामानुजचरणानां मतं नामोल्लेखपूर्वकं प्रदर्शितम्। अनुमीयते चानेनासीद्रामानुजचरणानां व्याख्यानं भक्तिसूत्रोपरि, परन्त्वस्माकं दुरदृष्टवशतो नैव दृष्टिगोचरमद्यापि जातम्[2]। अत्रत्यविशेषविषयादिकं विषयसूचीपरिशिष्टतो ज्ञातुं सुशकमतोऽत्र नायं विचारः प्रतन्यते। प्रकृतशाण्डिल्यसूत्राणि नारदप्रणीतभक्तिसूत्रतः प्राचीनानि श्रीभगवद्गीताश्रीमद्भागवतपुराणतोऽर्वाचीनानीति वक्तुं पार्यते। यतो महर्षिणा नारदेन महर्षिशाण्डिल्यस्य नामसंकीर्तनं भक्तिविषयकमतान्ततरप्रतिपादनप्रसङ्गे 'आत्मरत्यविरोधेनेति शाण्डिल्यः' इति रीत्या कृतं दरीदृश्यते। भगवद्गीतातोऽर्वाचीनत्वे 'सैकान्तभावे गीतार्थप्रत्यभिज्ञानात्' इति महर्षिशाण्डिल्यसूत्रमेव प्रमाणम्। श्रीमद्भागवततोऽर्वाचीनत्वे च 'परां कृत्वैव सर्वेषां तथा ह्याह' इति सूत्रं प्रमाणतया निर्देष्टुं शक्यम्। यद्यप्यस्मिन्सूत्रे स्पष्टतया श्रीमद्भागवतस्योल्लेखो गीतावन्नोपलभ्यते, तथापि यमर्थमुद्दिश्य 'तथाह्याह' इत्युक्तम्, सोऽर्थः—ज्ञानान्तानां साधनानां परानुरक्तिरूपां भक्तिमुत्पाद्यैव श्रैष्ठ्यं नान्यथेत्याकारको विशेषरूपेण श्रीमद्भागवत एवोपलभ्यते नान्यत्र। भक्तिशास्त्रसम्बन्धित्वेन निर्देशोऽस्य शाण्डिल्यमहर्षेः शाण्डिल्यसंहितायामुपलभ्यते[3]। सूत्रोपरि श्रीरामानुजचरणानां भाष्यकृतत्वेनोपलब्धेरीशवीयदशमशताब्दीतः पूर्वं सूत्राणामुपलब्धिः कल्पयितुं शक्या[4]। अस्तु।

---

१ द्रष्टव्यानि—९१, ९२, १४२, २१८ इत्यादिपृष्ठानि।

२ यदि स्यात्केषांचिन्महाभागानां निकटे सम्पूर्णं खण्डितं वा तत्, तैः स्वयं प्रकाश्याथवास्मन्निकटे प्रेषणेनानुग्रहः कर्तव्य इति।

३ द्वितीयो वेदशाण्डिल्यो वंशाध्याये निरूपितः।
येनाधीता त्रयी विद्या भक्तिविद्या ह्यनुत्तमा॥ (अं० ४ अ० १६ श्लोकः २७)

४ इदमप्यपरं प्रसङ्गतः प्रसिद्ध्यति श्रीमद्भागवतं श्रीमहर्षिशाण्डिल्यसूत्रकालतः प्राचीनतममिति।

अस्य सूत्रजातस्य कर्तृश्रीशाण्डिल्यविषयकेनिवृत्तजिज्ञासायां वंशाध्यायवर्णितो भक्तिशास्त्राध्येता महर्षिः शाण्डिल्यः स्यादिति कल्पयितुं सुशकम्[1] । शाण्डिल्यसंहिताप्रणेता ललितादेवीशिष्योऽप्येकः शाण्डिल्य उपलभ्यते । तेन प्रणीतभक्तिशास्त्रीयशाण्डिल्यसंहिताया उपलब्धेः, शाण्डिल्यसंहितायां संहिताकर्तृशाण्डिल्यस्य वंशाध्यायनिरूपितशाण्डिल्याद्भिन्नत्वेन निर्देशाच्च[2] वंशाध्यायवर्णितः शाण्डिल्य एव सूत्रप्रणेता । जयासंहिताप्रणेता शाण्डिल्यस्त्वस्मात्सूत्रप्रणेतृश्रीमहर्षिशाण्डिल्याद्भिन्न एव, यतो जयासंहितासम्बद्धत्वेन नारदशिष्यत्वेन च तस्योपलब्धेः[3] । अस्य तु गुरुशिष्यानुक्रमे वात्स्यादनन्तरत्वेनोपलब्धेः[4] ।

भक्तिचन्द्रिकाप्रणेता विद्वदग्रेसरः श्रीनारायणतीर्थो भक्तिरसायनस्थानेकपङ्क्त्यनुपूर्वीलेखनेन वृद्धपदेन मधुसूदनसरस्वतीबोधनेन[5] श्रीमधुसूदनकृतसिद्धान्तबिन्दुव्याख्याकरणेन च मधूसूदनसरस्वत्या अनन्तरं जात इति, श्रीसंस्कारकौस्तुभादिग्रन्थप्रणेतृद्वितीयानन्तदेवात्प्राचीन इति च वक्तुं शक्यम् । यतोऽनन्त-

---

१ द्वितीयो वेदशाण्डिल्यो वंशाध्याये निरूपितः। येनाधीता त्रयी विद्या भक्तिविद्या ह्यनुत्तमा ॥ ( शां० अं० ४ अ० १६–२७ ) बृहदारण्यके चतुर्थाध्याये वंशनिरूपके पञ्चमब्राह्मणे 'कौण्डिन्यात्कौण्डिन्यः शाण्डिल्यात् शाण्डिल्य' इत्युक्तम् ।

२ तृतीयो गार्धभिः प्रोक्तो वीरवैष्णवशासनम् ।........ ॥ शिष्यः श्रीललितादेव्याः व्यासस्य च महात्मनः । संहिता कथिता तेन सारभूतागमाम्बुधेः ॥ ( शां० अं० ४ अ० १६ )

३ कृतकृत्यो जगत्यस्मिन् शाण्डिल्यः श्रूयते भुवि ।........ ॥ यादृक् प्राप्तं मया पूर्वं परितुष्टाच्च नारदात् । इति ( जयासं० पं० १ )

४ बृहदारण्यके षष्ठाध्यायपञ्चमब्राह्मणे 'वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्यात्' इत्युक्तम् ।

५ द्रष्टव्यानि २८, १९८, २२० पृष्ठानि ।

देवेन स्वीयभक्तिनिर्णये श्रीनारायणतीर्थप्रदर्शितानामृक्शाखागतानां नानाविधभक्तिबोधकानां मन्त्राणां स्वीकारस्य दर्शनात्, श्रीब्रह्मानन्दानां नारायणतीर्थशिष्याणां द्वितीयानन्तदेवतः प्राचीनत्वाच्च। एवं च श्रीमधुसूदनसरस्वत्या अनन्तरं द्वितीयानन्तदेवात्पूर्वं श्रीनारायणतीर्थानां स्थितिकाल इति संभावयितुं शक्यते । अथापि श्रीमधुसूदनसरस्वत्याः कालस्तु ईशवीयषोडशशतकमिति[1] विदुषां सम्मतः । द्वितीयानन्तदेवसमयस्तु तदाश्रयदातुर्बाजबहादूरचन्द्रदेवस्योपलब्धदानपत्राधारेण बाजबहादूरचन्द्रदेवस्य निश्चितेन वैक्रमीयेन १७३० कालेन सम एव[2] । एवं च सप्तदशशतकमध्यकालः श्रीनारायणतीर्थानामितिकल्पनं सुसमीचीनमेव । अनेन कृता अद्ययावच्छ्रुता केचनोपलब्धाश्च ग्रन्था एते—

१ तत्वचन्द्रः, साङ्ख्यतत्त्वकौमुदीव्याख्या ।

२ न्यायकुसुमाञ्जलिव्याख्या ।

३ भक्तिचन्द्रिका शाण्डिल्यसूत्रव्याख्या ।

४ भक्त्यधिकरणमाला ।

५ योगचन्द्रिका ।

६ योगसूत्रवृत्तिः, गूढार्थद्योतनिका ।

७ वेदस्तवटीका ।

८ वेदान्तविभाविता टीका ।

९ साङ्ख्यचन्द्रः, ईश्वरकृष्णकृतसाङ्ख्यकारिकाटीका ।

१० सद्धान्तबिन्दुमहद्व्याख्या ।

११ सिद्धान्तबिन्दुलघुव्याख्या । इति ।

प्रायः सर्वदर्शनग्रन्थकाराणामेतेषां पाण्डित्यं श्रीवाचस्पतिमिश्रव-

---

१ द्रष्टव्यम् 'अच्युतग्रन्थमालायाः तृतीयवर्षीयचतुर्थाङ्के पृष्ठम् ११४

२ अस्मत्संपादितभक्तिनिर्णयभूमिका द्रष्टव्या ।

श्लोकातिशायीति कथने न मिथ्योक्तिवादस्य भीतिः । अनेन महात्मना चतुर्थाश्रमं स्वीकृत्य तीर्थाधिपे प्रयागे भक्तिचन्द्रिका कृतेति प्रारम्भिकश्लोकतो ज्ञायते[1] । अस्य महात्मनो विद्यागुरवो श्रीवासुदेवसंज्ञकास्तथाश्रमगुरवः श्रीरामगोविन्दतीर्थपादा आसन्निति भक्त्यधिकरणमालादिग्रन्थतो ज्ञायते[2] । अस्तु ।

अस्य ग्रन्थस्य प्रथमो भागः ईशवीये १९२४ तमे वर्षे श्रीमन्महामहोपाध्यायविद्वदग्रेसरानेकगुणालंकृतप्रिन्सिपॉलश्रीगोपीनाथकविराजमहोदयैः संशोद्ध्य संमुद्र्य प्रकाशितः । अनन्तरं च तैरेव द्वितीयभागसंशोधने प्रवर्तितोऽहमेकमेवाशुद्धिबहुलं क्वचित्खण्डितं लिखितपुस्तकं स्वीकृत्य कार्यं प्रारब्धवान् । समाप्तप्राये ग्रन्थे पुस्तकबन्धनात्प्रागेव मध्यखण्डितचन्द्रिकायाः पृष्ठद्वयमेकत्र स्थाने उपलब्धं तच्च यथास्थाने पुनस्तमेवाङ्कं समुल्लिख्य समयोजितवान् । अस्तु । अत्र प्रथमत एतत्कार्यकरणे योजितवतां प्रिन्सिपॉलश्रीमन्महामहोपाध्यायश्रीविद्वग्रेसराणां श्रीगोपीनाथकविराजमहोदयानां तथा च तत्स्थानापन्नानां तथैव मां कार्यकरणे प्रोत्साहयतां विद्वद्वराणां डॉ० श्रीमन्मङ्गलदेवशास्त्रिमहोदयानामुपकारं संप्रकाश्य यस्य कृपाकटाक्षक्षेपात्पदमपि चलितुं न शक्नोति मानवस्तस्य परमेश्वरस्य दयां संविभाव्यात्रत्याशुद्धिस्थलानि शोधनपत्राधारेण संशोध्य सफलीकुर्वन्तु मामकीनं परिश्रमं विद्वदग्रेसरा हंसव्रतधरा गुणैकपक्षकक्षीकुर्वाणा इति निवेदयते—

| | |
|---|---|
| गवर्नमेंटसंस्कृतकालेज<br>वैक्रम १९९४ पौषशुद्धप्रतिपद्<br>काशी । | विद्वद्वशंवदः—<br>**अनन्तशास्त्री फडके**<br>व्याकरणाचार्यो मीमांसातीर्थश्च । |

---

१ स्मृत्वा चित्तरितीर्णशास्त्रजलधीन्नत्वा गुरून् तीर्थपे
तीर्थे तीर्थफलां तनोति मतिमान्नारायणाख्यो यतिः ।

२ श्रीरामगोविन्दसुतीर्थपादकृपाविशेषादुपलभ्य बोधम् ।
श्रीवासुदेवादधिगत्य सर्वशास्त्राणि वक्तुं किमपि स्पृहा नः ।

# अथ भक्तिचन्द्रिका-विषयानुक्रमणिका ।

| विषयः । | पृष्ठम् । |
| --- | --- |

| विषयः । | पृष्ठम् । |
| --- | --- |

इति विषयसूचिका ।



प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति--

## तत्परिशुद्धिस्तु गम्या लोकवल्लिङ्गेभ्यः ॥ १७ ॥

तस्या भक्तेः परिशुद्धिः परिपाकरूपा शुद्धिः-

'न चलति भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि स वैष्णवाग्र्य'इत्यादिनोक्ता लिङ्गेभ्यो गम्याऽनुमेया ।

तत्र दृष्टान्तः--

लोकवत् यथा लोके प्रकृष्टा नायकनायिकाद्यनुरक्तिस्तत्कथाश्रवणाश्रुपुलकाङ्कुरादिलिङ्गैरनुमीयते तद्वदित्यर्थः ॥ १७ ॥

स्मृतिसिद्धान्यपि लिङ्गानि संगृह्णाति—

## सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात् ॥ १८ ॥

सम्मानादीन्यपि लिङ्गानीति विभक्तिविपरिणामः । कुतो लिङ्गत्वं तत्राह स्मरणेभ्यः स्मृतिभ्यो बाहुल्यात् बहुधावगतेः ।

तत्र सम्मानं—

यो निर्हेतुक आदरः समतया सर्वास्ववस्थास्वयं
सर्वत्रास्ति सदैव चापि नियतः स्वोत्कृष्टगुर्वादिषु ।
प्राप्तो योऽव्यभिचारितामविरतं प्रीतेः समुत्कर्षतः
सम्मानः स निगद्यते सुकृतिभिर्मानादिदर्पापहः ॥

यथार्जुनस्य--

प्रत्युत्थानं तु कृष्णस्य सर्वावस्थो धनञ्जयः ।
न लङ्घयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥

बहुमानो यथेक्ष्वाकोः—

पक्षपातेन तस्मिन्मृगे पद्मे च तादृशि ।
चकार मेघे तद्वर्णे बहुमानमतिं नृपः ॥ इति ।

प्रीतिर्विदुरस्य—

या नः प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥

विरहो यथा गोपीनाम्—

गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम् ।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना ॥

इतरविचिकित्सा यथा श्वेतद्वीपनिवासिनां नारददर्शनेऽपि विघ्नबुद्धिः । यथा वोपमन्योः—

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया ।
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ॥

महिमकथनं यथा यमस्य—

नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥

तदर्थप्राणस्थितिर्यथा हनूमतः—

यावद्रामकथा लोके तावत्प्राणान् बिभर्म्यहमिति ।

तदीयता यथा वसोरुपरिचरस्य—

आत्मा राज्यं धनं चैव कलत्रं वाहनं तथा ।
एतद्भगवतः सर्वमिति तत्प्रेक्षते सदेति ॥

सर्वभूतेषु तद्भावो यथा प्रह्लादस्य—

तस्मात्सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयो हरिः ॥ इति ।

तस्मिन्नप्रातिकूल्यं यथा हन्तुमागतेऽपि भगवति भीष्मस्य—

एह्येहि देवेश जगन्निवास
नमोऽस्तु ते शार्ङ्गगदासिपाणे ।
प्रसह्य मां पातय लोकनाथ
रथादुदग्रादद्भुतशौर्यसंख्ये ॥

आदिशब्दादुद्धवाक्रूरादिचेष्टितान्यपि द्रष्टव्यानि ॥ १८ ॥

ननु कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ।
आविश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥

इत्यत्र प्रेम्णा गोपीनामिव सद्द्वेषादिना शिशुपालादीनामपि मुक्तिश्रवणात्तदकथनान्न्यूनता । तत्राह—

## द्वेषादयस्तु नैवम् ॥ १९ ॥

तुकारोऽसंभवज्ञापकः यस्माद्भक्तानां द्वेषादयोऽसंभाविताः। अतो द्वेषभयच्छलादयस्तु नैवम् । न भक्तिलिङ्गानीत्यर्थः। भक्तानां द्वेषाद्यभाव उक्तो महाभारते—( आनुशा० अ० १४९ )

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम ॥ इति ।

यद्वा, द्वेषप्रतिपक्षभावादित्यत्रोक्तं द्वेषविरोधं समर्थयितुमिदं सूत्रम् ।

द्वेषादयस्तु नैवम् न पूर्वोक्तलिङ्गानुमेया इत्यर्थः । तथा च द्वेषादयो न भक्तिरूपा इति सिद्धम् । शिशुपालस्य द्वेषानुबन्धादनवरतानुसन्धानादिना निखिलपापक्षये नत्प्रत्यक्षं ततो भक्त्या मुक्तिरिति मन्तव्यम् । अत एव विष्णुपुराणे—

पुनरप्यच्युतविनिपातमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुले जन्माव्याहतैश्वर्यं शिशुपालत्वेऽप्यवाप । तत्र त्वखिलानामेव भगवन्नाम्नां त्वंकारकारणमभवत् । ततश्च तत्कालकृतानामेषामशेषाणामेवाच्युतनाम्नामनवरतानेकजन्मसम्बर्द्धितविद्वेषानुबन्धिचित्तो विनिन्दनसंतर्जनादिषूच्चारणमकरोत् । तच्च रूपमुत्फुल्लपद्मदलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूरकटकोपशोभितमुदारपीवरचतुर्बाहुशङ्खचक्रगदाधरमतिप्ररूढवैरानुभावादटनभोजनस्नानासनशयनादिष्वशेषावस्थान्तरेषु तमेवाक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाय भगवद्धस्तचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परमं ब्रह्मरूपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् । तावच्च भगवच्चक्रेणाशु व्यापादितस्तेन तत्क्षणदग्धाखिलाघसंचयो भगवतैवान्तमुपनीतः तस्मिन्नेव लयमुपययाविति दग्धाघसंचयः प्रत्यक्षसमय एवान्तं नीतस्तत्रैव लीन इति तात्पर्यार्थः । न च कथं सगुणाभिनिवेशेन निर्गुणब्रह्मसासाक्षात्कारो भवेदिति वाच्यं सगुणाभिनिवेशजन्यापूर्वेण प्राचीननिर्गुणोपासनसंस्कारोद्बोधाभ्युपगमात् । अन्ये तु शिशुपालादेः सालोक्यादिमुक्तिरेवाभ्युपेयते नतु भगवद्भावलक्षणा मुक्तिरत एव सप्तमस्कन्धे वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मतां नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदावित्युक्तिः सङ्गच्छत इत्याहुः ॥ १९ ॥

ननु सन्त्वेतान्यवतारभक्तिलिङ्गानि तथापि सा न मुख्या

परमेश्वरातिरिक्तविषयकत्वेन मुक्तिप्रयोजकत्वाभावादित्याशंसावतारावतारिणोरहिकुण्डलन्यायेन भगवदवतारविषयापि भक्तिर्मुख्यैवेत्याशयवानाह—

## तद्वाक्यशेषात्प्रादुर्भावेष्वपि सा ॥ २० ॥

प्रादुर्भावोऽवतारः । विषयसप्तमी अवतारविषयापीति यावत् । सा भक्तिः मुख्यैवेति शेषः । कुतस्तद्वाक्यशेषात् तत्र तेषु ब्रह्मकोटित्वग्राहकाणां वाक्यशेषाणां सत्त्वात् । तथा हि श्रुतौ—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुद्रिच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

इत्यादि । पुराणे च

ब्रह्मविष्णुमहेशाख्याः शिवध्यानपरा अपि ।
परमात्मविभागस्था न जीवव्यूहसंस्थिताः ॥
ब्रह्मविष्णुमहेशानां तथा तेषां द्विजर्षभाः ।
आविर्भावविशेषाणां पुण्यपापादयो न हि ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ॥

इत्यादि तत्र श्रुतिवाक्यस्यायमर्थः । अदो मूलं अवतारिरूपं पूर्णं इदं अवताररूपं च पूर्णम् । सृष्टिकाले पूर्णान्मूलरूपादुद्रिच्यते । प्रलये च पूर्णस्य स्वस्य पूर्णमवताररूपं आदाय स्वीकृत्य एकीभूय पूर्णमेव मूलरूपमेवान्यत्रालीनं स्वयमवशिष्यत इति गौणो ह्यपूर्णः अन्यस्मिंश्च लीयते अयं तु न तथेति भाव ॥ २० ॥

भवतु सा मुख्या भवति कस्मात्तत्राह—

## जन्मकर्मविदश्चाजन्मने शब्दात् ॥ २१ ॥

जन्म भगवतोऽवतारभावः । कर्म दैत्यवधभक्तोद्धारादिकम् । तज्ज्ञानवतश्चकारात् परमात्मरूपताविदो मनोमालिन्यनिरासोल्लासद्वारा सा भवति । किंकृते अजन्मने जन्माभावलक्षणफलाय कुतः शब्दात् । गीतादौ

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोर्जुनेति ॥

शब्दसत्त्वात् जन्मकर्मवेदनस्य साक्षादमृतफलत्वाभावात् भक्तिद्वारैव कारणतेति भावः ॥ २१ ॥

जन्म न प्राकृतानामिव भौतिकादिदेहपरिग्रह इत्यभिप्रेत्याह—

## तच्च दिव्यं स्वशक्तिमात्रोद्भवात् ॥ २२ ॥

अङ्गीकृतदेहरूपं जन्म चेत्यर्थः । दिव्यं स्वप्रकाशं न भौतिकं कुतः स्वशक्तिमात्रोद्भवत्वात् । सम्यगप्रच्युतज्ञानबलवीर्यादिशक्तौ बहुसङ्कल्परूपमाययैव चाविर्भावात् । अत एव मोक्षधर्मे

मायैषा हि मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसीति ॥

तथा गीतायाम्—

अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममाययेति ॥

अयमर्थः । अजत्वादव्ययत्वादीश्वरत्वाच्च कर्मपारतन्त्र्याभावेन जन्मायोग्योपि स्वां प्रत्यगनन्यां प्रकृतिमधिष्ठाय स्वीयया मा-

यया सम्भवामीति । अयं यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादाय केवलया मायया स्वसदृशमेव द्वितीयं मायाविनं सूत्रादिमार्गेण गगनमारोहन्तं सृजति एवं स्वयम् । कूटस्थानन्दसाऽचिन्मात्रोऽहं स्वमायया स्वप्रकाशसच्चिदानन्दमाययात्मनः शरीरं बाल्याद्यवस्थाभिः क्रीडनकं सृजामीति यावत् । अत एव सम्भवोऽत्र प्राकट्यमात्रं न तूत्पत्तिः सच्चिदात्मकानां तेषां नित्यतया तद्बाधात् । अत एवोक्तं वाराहे—

सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ॥
परमानन्दसंदोहाः ज्ञानमात्राश्च सर्वतः ।
सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः ॥ इति ।

ननु तर्हि तत्र गर्भप्रवेशजननबाल्यपौगण्डकौमारादिप्रतीतीनां का गतिरिति चेत्, या गतिरुदाहृतमायाविनः । मायया सूत्रादिमार्गेण गगनाद्यारोहणप्रतीतेः । एतेन भगवच्छरीरस्य किमुपादानम् ? अविद्येति चेत् ? न, परमेश्वरे तदभावात् । जीवाविद्येति चेत् न । शुक्तिरजतादेरिव तुच्छत्वापत्तेः । चिन्मात्रमिति चेत् न । चितः साकारत्वापत्तेः । तथात्वेऽपि वा तस्यातीन्द्रियत्वापत्तेरित्यपि निरस्तम् । प्रत्यक्चैतन्यमात्रोपादानकस्य स्वमाययाविर्भावमात्राङ्गीकारात् । पुराणेष्वपि नित्यैव सा जगन्मूर्त्तिरिति सावधारणं प्रतिज्ञाय देवानां कार्यसिध्यर्थमाविर्भवति सा यदेत्यादिना तथाबोधनात् । एतावांस्तु विशेषः । लौकिकमायावी मायामुपसंहरन् द्वितीयमायाविनमप्युपसंहरति । भगवांस्तु तामनुपसंहरन् स्वविग्रहमपि नोपसंहरतीति । एवं हि सति हिरण्यश्मश्रुत्वा-

दिलक्षणविग्रहवतश्चेतनस्यान्तस्तद्धर्मोपदेशादिति न्यायसिद्धं सर्वेश्वरत्वं युज्यते नान्यथा। तस्मात्सिद्धं भगवतो मायामयं शरीरम्। न च तच्छरीरस्य कर्मजन्यत्वाभावे भोगायतनत्वाभावाल्लक्षणायोगः। मायापरिणामस्य ज्ञानेच्छादिवृत्तेरिव सुखवृत्तेरङ्गीकारे विरोधाभावेन सुखदुःखान्यतरावच्छेदकत्वरूपभोगायतनत्वसम्भवात्। अत एव भोगमात्रसाम्यलिंगाच्चेत्यधिकरणे भोग उक्तः। वस्तुतस्तु शरीरत्वं चेष्टावत्त्वमखण्डोपाधिर्जातिर्वेति न कोपि बाधावकाशः। चेष्टा तु हिताहितप्राप्तिपरिहारार्थी क्रिया। सा च भक्तं प्रति भगवच्छरीरे प्रसिद्धैव श्रुतिस्मृतिपुराणेष्वित्यास्तां विस्तरः॥ २२॥

नन्वाप्तकामस्य भगवतः प्रयोजनाभावे कथं शरीरपरिग्रहादिस्तत्राह—

## मुख्यं हि तस्य कारुण्यम्॥ २३॥

मुख्यं कारणमित्यर्थः। यद्वा, हि यस्मात्तस्य मुख्यं निरूपाधि कारुण्यं ततो जन्मादीत्यर्थः। यस्य धनादिकमुद्दिश्य परदुःखनिवृत्तीच्छा तस्य तु नैव कारुण्यम्। यस्य तु पुण्यादिकमुद्दिश्य तस्य गौणम्। यस्य न किमप्युद्दिश्य किन्तु स्वभावादेव तस्य मुख्यं निरूपाधिपरदुःखनिवृत्तीच्छारूपम्। तादृशेच्छानियतो वृत्तिविशेषो वा। तादृशकरुणाजन्येच्छायां तु फलेच्छा न हेतुः।

न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किंचन।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि॥
यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥

इत्यादि प्रमाणानुरोधेनैव कार्यकारणभावकल्पनाया उचितत्वादिति भावः। भगवान् बादरायणस्तु 'लोकवत्तु लीलाकैवल्य'मित्यत्र लीलामेव जगज्जन्मादिकारणमाह। तन्मतेपि आनन्दविशेषाधीना क्रिया लीलेति कस्यांचिदानन्दविशेषाधीनेच्छायां फलेच्छा न हेतुः "क्रीडतो बालकस्येव चेष्टां तस्य निशामये"त्यादि वाक्यानुरोधात्। "देवतिर्यङ्मनुष्यादिचेष्टावन्ति स्वलीलये"त्यत्र तु लीलया तद्धेतुना आनन्दविशेषेणेत्यर्थः। न च क्रीडतोपि तस्य वैषम्यादिकं तत्तददृष्टापेक्षितत्वात्। ननु कारुणिकस्य निषिद्धकारयितृत्वमयुक्तमिति चेन्न। पूर्वपूर्ववासनापेक्षिततया तत्कारयितृत्वोपपत्तेः। परम्परयोद्दिधीर्षासत्त्वाच्च कारुण्यं भगवत इति भावः। एतेन

यदा सर्वमिदं नासीत्कावस्था तत्र गम्यताम्।
प्रजापतेः क्व वा स्थानं किं रूपं च प्रतीयताम्॥
ज्ञाता च कस्तदा तस्य जनं यो बोधयिष्यति॥
उपलब्धेर्विना चैतत्कथमध्यवसीयताम्।
प्रवृत्तिः कथमाद्या च जगतः संप्रतीयते॥
शरीरादेर्विना चास्य कथमिच्छापि सर्जने।
शरीराद्यथ तस्य स्यात्तस्योत्पत्तिर्न तत्कृता॥
तद्वदन्यप्रसङ्गोपि नित्यं यदि तदिष्यते।
पृथिव्यादावनुत्पन्ने किम्मयं तु पुनर्भवेत्॥
प्राणिनां प्रायदुःखा च सिसृक्षाऽस्य न युज्यते।
साधनं चास्य धर्मादि तदा किंचिन्न विद्यते॥
न च निःसाधनः कर्त्ता कश्चित्सृजति किंचन।

नाधारेण विना सृष्टिरूर्णनाभेरपीष्यते ॥
प्राणिनां भक्षणाच्चापि लाला तस्य प्रवर्तते ।
अभावाच्चानुकम्प्यानां नानुकम्पास्य जायते ।
सृजेच्च सुखमेवैकमनुकम्पाप्रयोजितः ।
अथाशुभाद्विना सृष्टिः स्थितिर्वा नोपजायते ॥
आत्माधीनाभ्युपाये हि भवेत् किं नाम दुष्करम् ।
तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते ॥
जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति ।
प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते ॥
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत् ।
क्रीडार्थायां प्रवृत्तौ तु विहन्येत कृतार्थता ॥
बहुव्यापारतायां च क्लेशो बहुतरो भवेत् ।
संहारेच्छापि चैतस्य भवेदप्रत्यया पुनः ॥
ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम् ।
ईश्वरेच्छावशत्वे हि निष्फला कर्मकल्पना ॥ इति

मीमांसावार्तिककृदुक्तं निरस्तम् । प्रयोजनमनुद्दिश्यैव बुद्धिमतामपि लीलादौ प्रवृत्तिदर्शनात् । तदुक्तं वेदान्तसिद्धान्ते—

लीलाः श्वासं वृथा चेष्टा अनुदिश्य फलं यतः ।
अनुन्मत्तैर्विरच्यन्ते तस्मात्तृप्तस्तथा सृजेदिति ॥ २३ ॥

ननु नराणां च नराधिप इत्यादिना विभूतीनामपि भगवद्रूपत्वकथनाद्राजादिभक्तेरपि मुक्तिः स्यात्तत्राह—

## प्राणित्वान्न विभूतिषु ॥ २४ ॥

राजादिविभूतिषु भक्तिर्न मुक्तिफला कुतः अज्ञानाधार-

तोपहितप्राणित्वात् जीवत्वादिति यावत् । "नराणां च नराधिप" इत्यादिकं तु नेश्वरकोटिस्थत्वाभिप्रायेण किन्तु भगवदनुगृहीततदभिमानत्वाभिप्रायेण तस्मात् तद्भक्तिर्न मुक्तिफलेति भावः ॥ २४ ॥

हेत्वन्तरमप्याह—

द्यूतराजसेवयोः प्रतिषेधाच्च ॥ २५ ॥

धर्मशास्त्रैर्द्यूतराजसेवयोः प्रतिषेधः स्मर्यते परमेश्वरत्वे राज्ञस्तन्न स्यात् । द्यूतरागनिषेधोऽत्र दृष्टान्तार्थमुक्तः । तद्रागस्य भक्तित्वप्रसक्तेरेवाविर्भावात् ॥ २५ ॥

अवतारेष्वतिप्रसङ्गमाशङ्क्य समाधत्ते—

वासुदेवेपीति चेन्नाकारमात्रत्वात् ॥ २६ ॥

वासुदेवेपि प्राणित्वमस्त्येव मनुष्यत्वेनोपलभ्यमानत्वादिति चेन्न । कुतः आकारमात्रत्वात् । आकारेत्यत्रार्शाद्यच् । मात्रपदेनान्यथासिद्धजीवलिङ्गव्यवच्छेदः । तथा च मनुष्याकारवत्त्वेपि जीवत्वं नास्त्येव तदाकारवत्त्वमात्रस्य जीवत्वलिङ्गत्वेऽनुकूलतर्काभावात् । अत एव "आन्तरस्तद्धर्मोपदेशा"दित्याधिकरणे आदित्यमण्डलान्तर्वर्तिनो नारायणस्य प्रथमश्रुतादपि लिङ्गादविवक्षिताच्चरमश्रुतमपि प्रयोजनवत् लिङ्गबलीयस्तात्पर्याधीनत्वात् प्रामाण्यस्येति न्यायेन प्रयोजनवत्सर्वपाप्मोदयस्य ब्रह्माविनाभावलिङ्गस्यानुसारेण सामान्यप्रवृत्तां कर्मनिमित्तशरीरग्रहणश्रुतिमीश्वरविषयेऽपवाद्य कर्माभावेपि "य एषोन्तरादित्ये हिरण्मय," इति रूपवत्त्वं ब्रह्मपरतया नीतम्, अन्यथा सिद्धात् जीवलिङ्गाद-

नन्यथासिद्धस्यैश्वरलिङ्गस्य बलवत्त्वात्। तस्मादन्यथासिद्धादपि लिङ्गाज्जीवत्ववर्णनमज्ञानमूलमेव केषांचिदिति मन्तव्यम्। तदुक्तं—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितमिति ॥ २६ ॥

हेत्वन्तरमप्याह—

प्रत्यभिज्ञानाच्च ॥ २७ ॥

यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।
यत्रावतीर्णं विष्ण्वाख्यं परं ब्रह्म नराकृति ॥
यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः ।
स एव पुरुषव्याघ्र संबन्धीते जनार्दनः ॥
तपसा योऽप्यदृश्यो हि भगवान् लोकपूजितः ।
तं दृष्टवन्तस्ते साक्षात् श्रीवत्साङ्कविभूषणम् ॥

इति पुराणे श्रुतौ च "गोपवेशो मे पुरुषः पुरस्तादाविर्बभूव तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनसुरभूरुहतलासीनं सततं—

वने वृन्दावने क्रीडन् गोपगोपीजनैः सह ।
गोपरूपो हरिः साक्षान्मायाविग्रहधारकः ॥
अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् ।
ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ॥

सर्वभूतस्थमेकं नारायणं कारणरूपमकारणं परं ब्रह्मस्वरूप"मिति भक्तिसंनिहितस्य भगवतो वेदान्तावगतपरब्रह्माभेदावगमात्। तस्मात्कृष्णः परमेश्वर इति सिद्धम्। ननु यद्येवं तर्हि तस्य संकल्पमात्रेण सकलसृष्टस्य स्वतन्त्रस्य जीवलिङ्गैरज्ञत्वादिधर्मैः किमिति व्यवहरणमिति चेत्। प्रभोर्दुर्बोधत्वामस्वभा-

वत्वादित्यवेहि । तदुक्तं श्रुतौ—

"दुर्बोधं कुरुकं तस्य मायया मोहितं जग"दिति । एतेन तावन्मात्रेण जीवोत्पादनं केषांचिन्नरकायैवेत्यास्तां विस्तरः ॥२७॥

ननु कथं तर्हि "वृष्णीनां वासुदेवोऽस्मीति" जीवेषु वृष्णिषु तत्कथनं तत्राह—

## वृष्णिषु श्रैष्ठ्येन तत् ॥ २८ ॥

वृष्णिषु तत्प्रत्यभिज्ञानं श्रैष्ठ्येन श्रैष्ठ्यकथनस्यैव प्रस्तुतत्वात् । न तावता जीवत्वं प्रमाणाभावात् । ईश्वरत्वसाधकमानसत्त्वाच्चेति भावः ॥ २८ ॥

ब्रह्मनिष्ठेषु गुरुषु गुरुकल्पेषु च भक्तिरपि मुक्तिफलेत्याह—

## एवं प्रसिद्धेषु च ॥ २९ ॥

प्रादुर्भावेष्वपि सेत्यतः सेत्यनुवर्तते । अत एव—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्रुतिः—

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥

इत्यादिस्मृतिश्च वस्तुतोऽवतारत्वेन सर्वसंमतेषु रामनृसिंहादिषु परब्रह्मत्वम् "रामः शस्त्रभृतामह"मित्यादिना विभूतिषु कथनस्य चान्यार्थत्वमतिदेशेन निर्दिशति । एवमिति । एवं अनेन प्रकारेण प्रत्यभिज्ञादिबलत एवं सिद्धेषु च अवतारत्वेन निश्चितेष्वपि रामादिष्वाकारमात्रत्वं विभूतिषु कथनं चोक्तार्थं

मन्तव्यमिति शेषः ।

चिन्मयेऽस्मिन्महाविष्णौ जाते दाशरथौ हरौ ।
रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥

इत्याद्युपक्रम्य—

ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः ।
धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः ॥

इत्यादिना मध्ये तस्य ध्येयाकारं मानुषरूपमुक्त्वा

एवं भूतं जगदाधारभूतं रामं वन्दे सच्चिदानन्दरूपम् ।
गदाधरं शङ्खाब्जधरं भवारिं स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥

"अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रह" इत्यादिनान्ते तस्य "नृसिंह आसीत्परेश्वरो जगद्धितं चारु तद्रूपमि"त्यादि नृसिंहस्य—

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने—

त्यादिना सर्वेषामवतारिनारायणरूपत्वपरब्रह्मत्वयोः प्रत्यभिज्ञानात् । एवं—

यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥
स कारणं करणाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।

इत्यादिश्रुत्युक्तस्य हररुद्रेशानमहादेवादिपदबोध्यस्य शिवस्य पाराशरोपपुराणादौ—

तस्य साधारणी मूर्तिः साम्बा चन्द्रार्धशेखरा ।
तामेव सततं विष्णुब्रह्माद्याश्च सुरेश्वराः ॥
ध्यायन्ति बन्धनाशाय जगतां हितकाम्यये—

त्यादिना प्रत्यभिज्ञानात्परब्रह्मतैव । तथा भारतीश्रीभवानी

।भृतीनामपि वक्ष्यमाणप्रमाणत ईश्वरावतारत्वप्रत्यभिज्ञानात् ।
भतस्तद्भक्तिरपि मुक्तिफलेति भावः । अत्र श्रीकृष्णे भगवति
ाक्षात्पूर्वपक्षमवतार्य ब्रह्मत्वसमर्थनमन्येषां त्वतिदेशेन तत्सम-
ानमवतारान्तरतो लीलाविशेषादितः कृष्णस्याधिक्यमभिप्रेत्य ।
ोपालतापिन्याम्—

"एको हि वै पूर्वं नारायणो देवो यस्मिन्लोका ओताश्च प्रोता-
श्चे"त्युपक्रम्यावताराणां मध्ये श्रेष्ठोवतारः को भवति येन लोका-
तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात्संसाराद्भवन्ति ।
कथं वास्यावतारस्य ब्रह्मता भवतीति नारायणं प्रति ब्रह्मणः
प्रश्नेन तथा ज्ञापनात् । नन्वेतदेव कथं सर्वेषां तुल्यगुणव-
त्वात्, तदुक्तं—

सत्यं ज्ञानमनन्तमध्यसुखं शान्तं परं निर्मलं
ब्रह्मसादिमुखाः स्वरूपसचिवाः स्रष्टृत्वसंहर्तृते ।
सर्वेशित्वनियन्तृते च वशिता संकल्पसत्यात्मते
कारुण्यं च शरण्यता चिवशता मकेषु तेजोबलम् ॥
आत्मारामजनानुकृष्टिनिहतोद्धारौ महोदारता
शौर्यसमृद्धता परसुहृत्त्वाद्याश्च ताटस्थ्यतः ।
तेऽमी सन्ति सहस्रशो भगवति श्रीतत्त्वमूर्तौ हरौ
शंभौ चैव महेश्वरे परतरे कृष्णादिके नित्यशः ॥
इत्थं श्रीमति चिन्तिते भगवति भ्रान्त्यादयो दूरगा ।
दोषाः स्युर्यदि तत्र दोषधिषणां कुर्यात्कथं मानवः ॥

इति चेत् । सत्यं, तथापि—

सर्वाद्भुतचमत्कारी लीलाकल्लोलवारिधिः ।
अतुल्यमधुरप्रेममण्डितप्रियमण्डलः ॥
त्रिजगन्मानसाकर्षी मुरलीकलकूजितः ।

असमानोर्द्ध्वरूपश्रीविस्मापितचराचरः ॥
इत्यद्भुताः सदा कृष्णे किल सन्ति महात्मनि ।
लीलाप्रेम्णा प्रियाधिक्यं माधुर्यं वेणुरूपयोः ॥
इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ॥

इति विशेषाभिप्रायादिति मन्तव्यम् । स्वकृतमर्यादाया एव तत्र वीजत्वात् । तदुक्तं "स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमश्चकास्त्यनलवत्स्वकृतानुकृतिरि"ति । अतो न वस्तुनस्तारतम्यम् उक्तश्रुतिस्मृतिविरोधादित्यास्तां विस्तरः । एतेन नैते परमेश्वरस्य लीलावताराः । अथाशरीरस्य ब्रह्मण "एतास्तनवोऽग्निवायुरादित्यः कालोऽयं प्राणोऽन्नं ब्रह्मादिविष्णुरुद्र इत्येके अन्यमभिध्यायन्त्येकेऽन्य"मित्यादिमैत्रायणीयश्रुतावत्र च श्रुतौ ब्रह्मणो मायिकोपि देहो नास्ति । अग्न्यादिदेहा एव देहा इति निर्देशेन ब्रह्मणो मायिकलीलाविग्रहस्याप्याविर्भावज्ञापनेन लीलावताराभावज्ञापनात् । अत एव कालीपुराणादौ नृसिंहवराहशरभाणां परस्परोपमर्द्यत्वम् । अन्यत्र च ब्रह्मविष्णुरुद्राणां मोहपारवश्यादिकं श्रूयते । तस्माज्जीवविशेषा एव ते उपासनार्थं परमेश्वरा उच्यन्ते । परमात्मन्येवाहंभावाच्चा"हं सर्वस्य प्रभव" इत्यादि स्वात्मोपदेशोपि तेषामिति केषांचित्प्रलापो निरस्तः । उदाहृतश्रुतिस्मृतिविरोधान्मैत्रायणीयश्रुतौ स्वादृष्टारब्धभोगार्हशरीराभावस्यैव विवक्षणात् । विचित्रानेकशक्तिमत्स्वरूपेश्वरादेव 'लोकवत्तु-लीलाकैवल्य'मिति न्यायेन जीववद्व्यवहर्तृत्वस्य वक्तुं शक्यत्वाच्च । अत एव तेषां श्रौतपौराणभेदेन द्वैविध्यकल्पनमपि केषांचिद्वृथैवेति मन्तव्यम्, द्वैविध्ये मानाभावात् "वने वृन्दावने क्रीडन्नि"त्यादिश्रुतिमूलकत्वात्पुराणानां श्रुतिपुराणप्रतिपाद्ययोरेकत्वलाभाच्च । तस्मात्साक्षात्परमेश्वरस्यैव लीलावतारा इति मन्तव्यम् ।

अत्रेयं व्यवस्था—सच्चिदानन्दघनोऽद्वितीयो निर्विशेषसर्वकारणत्वाद्युपलक्षितः परमात्मा परब्रह्मादिपदाभिधेयो भगवान् । 'सत्यं ज्ञानमनन्तम्' ( तै० उ० २–१ ) इत्यादिश्रुतेः ।

युद्धे महाविभूत्याख्ये परब्रह्मणि शक्यते ।

मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे ॥ इति स्मृतेश्च ।

स एव त्रिगुणमायाविशिष्ट ईश्वर इति प्रोच्यते । 'मायिनं तु महेश्वरम्' ( श्वे० उ० ४–१० ) इति श्रुतेः । एतस्यैवावतारा ब्रह्मविष्णुरुद्राः । 'अथ यो ह खलु वा वाऽस्य तामसोंऽशोऽसौ ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वा वाऽस्य राजसोंऽशोऽसौ ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वा वाऽस्य सात्विकोंऽशोऽसौ ब्रह्मचारिणो योऽयं विष्णुः स वा एष एकस्त्रिधाभूतः' इति मैत्रायणीयश्रुतेः ( प्र० ४–५ ) । एते च गुणमात्रोपाधिकत्वाद् गुणावतारा अप्याविर्भूतानेकशक्तिमत्त्वात्पूर्णा एवेत्युच्यन्ते । ननु स्वेच्छापरिगृहीतलीलाविग्रहोपाधिका अपि ते न गुणमात्रोपाधिका अतो न कथं लीलाऽवतारा एवेति चेन्न । तथा सति प्रतिकल्पं लीलाविग्रहाणामानन्त्येन ब्रह्मादीनामप्यानन्त्यापत्तेः । न चेष्टापत्तिः । 'एको विष्णुरेको रुद्र' इत्यादिश्रुतिविरोधप्रसङ्गात् । तस्माद् गुणावतारा एवेति सिद्धम् ।

ये तु चतुर्भुजचतुर्मुखपञ्चमुखा नारायणविरिञ्चिमहेशाख्या मत्स्याद्यवताराश्च, ते तु सर्वे तस्यैव लीलाविग्रहोपहिता लीलावतारा एव । प्रतिकल्पं तेषामानन्त्यश्रवणात् । ननु कथमेते परमेश्वरस्यैवावताराः ? पुराणेषु चतुर्भुजाकारो विष्णोरवतारः, चतुर्मुखाकारो

ब्रह्मणः, पञ्चमुखाकारो रुद्रस्येति श्रवणादिति चेत्सत्यम् । यद्यप्येवं श्रूयते तथापि चतुर्भुजशरीरिणः पालनकर्तृताप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यम्, दैत्यसंहारादिरूपरुद्रकार्यदर्शनात् । तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्यत्वात् । एवं पञ्चमुखशरीरावच्छिन्नस्य त्रिपुरादिसंहर्तृत्वेऽपि न रुद्ररूपत्वनिर्णयः । संहारस्य जगत्पालनफलकत्वेन विष्णुकार्यत्वात् । 'शिव एको ध्येयः शिवङ्करः प्रज्ञा च तस्मात्प्रसृता पुराणी' इत्यादिश्रुत्या मुक्तिज्ञानादिरूपविष्णुकार्यप्रतीतेश्च । एवं भवान्यादेर्दैत्यादिसंहर्तृत्वेऽपि पालनरूपविष्णुकार्यदर्शनात्,

सैषा प्रसन्ना वरदा नृणां भवति मुक्तये । ( सप्तश० १–५७ )

इत्यादिना मुक्तिरूपविष्णुकार्यप्रतीतेश्च न रुद्ररूपत्वनिर्णयः । एवं पुराणतन्त्रादौ बहुशः सरस्वत्यादेरपि ज्ञानपालनादिरूपविष्णुकार्यप्रतीतेर्न ब्रह्मरूपत्वनिर्णयसम्भवः । तस्मात्सर्वाणि शरीराणि सर्वेषामपि । चतुर्भुजादिशरीरावच्छिन्ने क्लृप्तकार्यस्य रुद्रादावपि प्रतीतेः ।

एतदभिप्रायेणैव-

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥

इत्यादि बृहन्नारदीयानि,

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम् ॥

इति भविष्यत्पुराणस्थानि,

तपसा तोषयित्वा तु पितरं परमेश्वरम् ।
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥
कल्पान्तरेषु ब्रह्मा वै विष्णुरुद्रौ जजान ह ।
विष्णुश्च भगवाँस्तद्वद्ब्रह्माणमसृजत्पुनः ॥
नारायणं पुनर्ब्रह्माणञ्च देवः पुनर्भवः ।
एवङ्कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ॥
परस्परस्माज्जायन्ते परस्परजयैषिणः ।
तत्र कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ।
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ॥
यातुधाना भविष्यन्ति पिशाचाश्च न संशयः ।

इत्यादि वायुपुराणस्थानि च वचांसि समञ्जसानि । अन्यथा गुणभेदेन भेदसत्त्वाद्विष्णुशिवादिशब्दानां शिवविष्णुनामत्वाद्यसम्भवाच्चासङ्गते-रित्यास्तां विस्तरः ।

एवं रामकृष्णादयोऽपि न विष्णुचतुर्भुजादेरवताराः किन्तु परमेश्वरस्यैव । द्रोणपर्वणि—

चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥
एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणा साध्वसाधुनी ॥

अपरा कुरुते कर्म मानुषं लोकमाश्रिता।
शेते चतुर्थी त्वपरा.................. ॥

इत्यादिना तथा ज्ञापनात्। तत्रावताराणां लक्षणं व्यवस्था वोक्ता निबन्धेषु। तथाहि। अवतारो नाम स्वसङ्कल्पपूर्वकपराधीन-व्यक्तीकृतदेहो भक्तवात्सल्याद्यनेकगुणोल्बणः।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि॥ (म०भा०शां ३३९-४५)

इत्यादिभगवदुक्तेः। स च विभवार्चाभेदेन द्विविधः। तत्र विभवावतारः—गमनागमनसंश्लेषविश्लेषयोग्यं यथा भवति तथा दिव्यं देहं प्रकटयन् स्थितः। सोऽपि स्वरूपावेशभेदेन द्विविधः। तत्र स्वरूपावतारः सर्वेश्वरः स्वीयाप्राकृतरूपमितरसजातीयतया प्रकटयन् स्थितः। सोऽपि मनुजामनुजभेदेन द्विविधः। तत्र मनुजो रामकृष्णादिर्नराकृतिः। अमनुजस्तद्व्यतिरिक्तो देवतिर्यगादिः। यथोपेन्द्रमत्स्यादिः। यद्यप्येते पूर्णा एव,

धर्म्मो++तुं बध्नामि चलिते चलिते युगे।?
तास्ता योनीः प्रविश्याऽहं प्रजानां हितकाम्यया।
सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः॥

इत्यादिवाक्येभ्य उदाहृतश्रुतिभ्यश्च। तथाऽपि तत्र कृष्णः पूर्णः, आविष्कृतानेकशक्तिमत्त्वात्। अन्ये त्वंशकला आवि-ष्कृताल्पशक्तिमत्वादित्यभिप्रेत्योक्तं श्रीभागवते—

अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्। (भाग०१-३-२८)

इति विचारान्तरम् । आवेशावतारोऽपि स्वरूपशक्त्या-वेशभेदेन द्विविधः । तत्र स्वरूपावेशावतारः—केषुचिच्चेतनेषु स्वेन सन्निधीभूय स्थितः । शक्त्यावेशावतारः—तथैव शक्त्या सन्निधीभूय स्थितः । तत्राद्यः—कपिलानन्तव्यासपरशुराम-प्रभृतिः । द्वितीयः–पृथुधन्वन्तरिप्रभृतिः । ' स्वशक्तिलेशाऽऽदृतभूत-सर्ग ' इत्यादिस्मृतेः । एवं

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । ( गी० १०–४१ )

इत्यादिना भगवतोक्ता आधुनिका अपि । अर्चावतारस्तु मन्त्रादिसंस्कृता मूर्तिः शालग्रामादिश्च, तत्र भगवतो मन्त्रसङ्क-ल्पादिवशतः सन्निधानात् । अत एवेश्वरत्वेन पूजातस्तेभ्यः फलम-पीत्यास्तां विस्तरः ।

इति श्रीनारायणतीर्थविरचितायां शाण्डिल्यसूत्र-वृत्तौ द्वितीयाध्यायस्य प्रथमाह्निकम् ।



# द्वितीयाध्याये

## द्वितीयाह्निकम् ।

ननु भक्तिः फलमेव सर्वेषां ज्ञानान्तानामुपायानामित्युक्तम् । भक्तिशब्दश्च पुराणेषु 'श्रवणं कीर्तनं विष्णोः' (भा०७-५-२३) इत्यादि प्रकृत्य 'इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा' इत्यादिवाक्यैः श्रवणकीर्तनादौ प्रयुज्यते, तत्र च भक्तेर्योगः श्रूयते—

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या...... ॥ ( गी० ९-१४ ) इति ।

एवं 'ये भजन्ति तु मां भक्त्या' इति ( गी० ९-२९ ) भक्ति-भजनयोर्भेदोऽवगम्यते । अतः का सा भक्तिः किं तद्भजनमिति जिज्ञासामपनिनीषुराह—

**भक्त्या भजनोपसंहाराद्गौण्या परायै तद्धेतुत्वात् ॥ १ ॥**

भक्त्येति । परायै-परभक्त्यर्थं, गौण्या-वृत्त्या जीवनशब्देन लाङ्गलस्येव, भक्तिनाम्ना भजनानां-कीर्तनादीनामुपसंहारात्-सङ्गृह्याऽन्ते कथनाद् भक्तिभजनश्रवणकीर्तनादीनामेकार्थत्वम् । साधनता च प्रतिबन्धकदुरितनिवृत्तिद्वारा परभक्तिप्रतीतिभावः । कुतः ? तद्धेतुत्वात् ।

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् । (गी०९-२९)

इत्यनेन सकलतद्भजनरूपसाधनस्य तदनुरक्तिद्वारा तदनुग्रहं प्रति हेतुत्वलाभादिति भावः। तथा च 'चित्रया यजेत' इतिवत्सामानाधिकरण्येन भक्तिनामकभजनेनेष्टं भावयेदित्येवार्थः । न तु भक्त्या भजनं, तेन कीर्तनादि, तेन च मयि स्थितिरित्यादिः, वाक्यभेदापत्तेरित्यास्तां विस्तरः ।

वस्तुतो गौण्या भक्त्या भजनोपसंहारादाराध्यत्वज्ञानरूपगौणभक्तिमतां कीर्तनादिभजनानां कर्तव्यताकथनात् 'सोमेन यजेत' इत्यादौ सोमवता यागेनेष्टं भावयेदिति गुणविशिष्टविधानवदत्रापि तादृशभक्तिमद्भिः कीर्तनादिभजनैः परभक्तिमुत्पादयेदिति तादृशभक्तिविशिष्टविधानमेवेति भावः ।

केचित्तु—

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्। (गी० ९-२९)

इत्यत्र पदद्वयसार्थक्याय भक्त्या-कीर्तनादिरूपगौणभक्त्या भजन्ति-अनुरञ्जयन्तीत्यर्थः । तथा

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । (गी० ९-१४)

जितेन्द्रियाः सततं कीर्तयन्तो—नामग्रहणं कुर्वन्तः, तथा यतन्तो यतमाना अर्चनादिकं कुर्वन्तः, नमस्यन्तः कायवाङ्मनोभिर्नमस्कुर्वन्तः, मां भगवन्तमुपासते-चिन्तयन्ति, ते भक्त्या-प्रेम्णा नित्ययुक्ताः सदा संयुक्ता भवन्तीति शेषेणार्थः । दृढव्रताः-एवं तादृशकीर्तनादिपरा नित्यप्रेमयुक्ता भवन्तीति यावत् । 'माम्' इति द्वयं कीर्तननमस्कारयोः पृथक्प्राधान्यज्ञापनाय । इत्थं च

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । (गी० ९-१३)

इत्यनेन परभक्तिमनूद्य 'सततं कीर्तयन्तो माम्' इत्यनेन कीर्तनादीनां तत्र सविनत्वमुक्त्वा 'ये भजन्ति तु मां भक्त्या' इत्युपसंहृतं भगवतेत्यभिप्रेत्याह-भक्त्या भजनेति। गौण्याः परायै इति पाठः। तथा चायमर्थः-भक्त्या भजन्तीति साधनभक्त्या फलभक्तेः कथना-द्गौण्याः कीर्तनाऽऽदिरूपायाः परायै परभक्त्यर्थमेव, कुतो गौणत्व-मासान्तत्राह-तद्धेतुत्वात् परभक्तिसाधनत्वात्। तथाच कीर्तना-दिषु परभक्तिसाधनत्वेन'आयुर्घृतम्' इतिवद्भक्तिशब्दो गौण एव। एतेन 'भज सेवायाम्' इति स्मरणकीर्तनादावपि मुख्य एव भक्तिशब्दो-ऽस्त्विति निरस्तम्। लाघवादनुराग एव धातोः शक्तेः। अत एव भक्त्या स्मरति कीर्तयति नमस्यतीत्यादिप्रयोगाः। एतेन कीर्तनत्वादेरपि जातिविशेषतया तद्रूपेण शक्तिरस्त्वित्यपि परास्तमित्याहुः॥ १॥

अनुरागार्थमेव कीर्तनादिभक्तिरिति कुतो निर्णीतं तत्राह-

**रागाऽर्थप्रकीर्तिसाहचर्याच्चेतरेषाम् ॥ २ ॥**

रागार्थेति।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः॥

(गीता अ० ११ श्लो० ३६)

इत्यत्र तत्र प्रकृष्टयोपचितया कीर्त्या-कीर्तनेन कृतेन वा यशसा वा तेन जगत्-जनः प्रहृष्यति-प्रकर्षेण सुखी भवति, अनुर-ज्यते च त्वय्यनुरागं प्राप्नोति। तत्र हर्षो द्वारम्। त्वय्यनुरागश्च

फलभक्तिः फलम् । तथैवान्वयव्यतिरेकादित्यर्थेन स्पष्टमेव । कीर्तनस्यानुरागार्थत्वलाभः, तत्साहचर्यात् । 'सततं कीर्तयन्तो माम्' इत्याद्युक्तानामपि तदेव फलम्,

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगन्तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजन्तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥

( भ० गी० १०, ९-११ )

इत्यादिवाक्यैरपि तथावगमादिति भावः । अत्र भजतामिति सामान्यत उक्तस्य विशेषोक्तिर्मच्चित्ता इति । स्मरणस्य मद्गतप्राणा इति मदर्थजीवना इत्यर्थः । अथवा चित्तोपादानाद् मद्गतबहिरिन्द्रिया इत्यर्थः । ततश्च श्रवणार्चनादिपरिग्रहः । बोधयन्तः-स्मारयन्तः, कथयन्तः-संकीर्तयन्तः, तुष्यन्तीति भावभक्तिनिर्देशः । रमन्तीति प्रेमभक्तिनिर्देशः । तत्र भावः प्रथमावस्था प्रेमोत्तरावस्था इति तयोर्भेदेन निर्देशो बोध्यः । बुद्धियोगं स्वरूपाऽवबोधं भगवन्मूर्तिस्फूर्तिश्च । येन बोधेन कथितेन द्विविधेन मां-निर्गुणं सगुणश्चोपयान्ति प्रपद्यन्ते । प्रपत्तिश्चरमप्रेमरूपा प्रागेवोक्ता । तत्र स्वरूपावबोधतो निर्गुणे, मूर्तिस्फूर्तितः सगुण इति विवेकः । तेषां सगुणनिर्गुणनिष्ठानामनुकम्पाऽर्थं—स्वरूपप्राप्तये, अहं ज्ञानदीपेन-स्वसङ्कल्पेन, अज्ञानं-प्रत्यगंशाभेदावरकन्नाशयामीत्यर्थः । तथा च सिद्धं ज्ञाना-

न्तानां सर्वेषामुपायानां प्रेमभक्तिरेव फलम् । ततो भगवदनुग्रहतश्च कृतार्थतेति संक्षेपः ॥ २ ॥

ननु कीर्तनाऽऽदेः कः काल इत्यपेक्षायामाह--

अन्तराले तु शेषाः स्युरुपास्त्यादौ च काण्डत्वात् ॥३॥

अन्तराल इति । तुरवधारणे भिन्नक्रमः । अन्तराले—ज्ञानसाधनश्रवणमननाद्यन्तराल उपास्त्यादौ च क्रममुक्तिफलकोपासननिष्कामयज्ञाऽऽदिकर्माऽऽचरणादावपि, शेषा एव-गौण्यो भक्तय एव कार्या इति शेषः । कुतः ? काण्डत्वात्-यथासम्भवमेकफलसाधनसमूहरूपत्वात् । कोर्तनाऽऽदोनां वक्ष्यमाणप्रमाणतः क्वचिदङ्गाङ्गिभावतः, क्वचिद्विकल्पतः, क्वचित्समुच्चयतस्तत्वज्ञानपरभक्तिमुक्तिसाधनत्वस्य वक्तव्यत्वात् ॥ ३ ॥

किन्द्वारा साधनत्वन्तत्राऽऽह—

ताभ्यः पावित्र्यमुपक्रमात् ॥ ४ ॥

ताभ्य इति । ताभ्यो-गौणभक्तिभ्यः, उपक्रमात्-आरम्भसमयमारभ्यैव, पावित्र्यं-पापक्षयः । अभ्यस्तानामेव पापक्षयहेतुत्वमिति न नियमः, सकृदुच्चारणमात्रेणाऽजामिलादेः समस्तपापक्षयस्य पुराणेषु—

अयन्तु कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ (भाग० ६-२-७)

यद्‌द्व्यक्षरन्नाम गिरेरितन्नृणां
सकृत्प्रसङ्गादघमाशु हन्ति ।

पवित्रकीर्तिं तमलङ्घ्यशासनं

भवानहो द्वेष्टि शिवं शिवेतरः ॥ (भाग० ४-४-१४)

इत्यादिना कथनात् । तथा च समस्तदुरितक्षय एव द्वारमिति भावः ॥ ४ ॥

सर्वत्र भक्त्येति कथनस्याऽऽभिप्रायान्तरं वर्णयतां मतमाह—

## तासु प्रधानयोगात्फलाऽऽधिक्यमेके ॥ ५ ॥

तास्विति । 'यो मे भक्त्या प्रयच्छति' (गी० ९-२६) नमस्यन्तश्च मां भक्त्या' ( भ० गी० ९-१४ ) इत्यादिवाक्यबलात्, तासु-गौणीषु, प्रधानस्य-अनुरागस्य योगात्फलाऽऽधिक्यमेक-आचार्या मन्यन्ते । अनुरागाङ्गतया कृतकीर्तनाऽऽदिभिः कैवल्यमपि भवति । अन्यथा तु पापनिवृत्तिमात्रमिति भावः ॥ ५ ॥

मतान्तरमाह—

## नाम्नेति जैमिनिः संभवात् ॥ ६ ॥

नाम्नेति । नाम्ना-तत्कीर्तनेन फलाऽऽधिक्यं जैमिनिराचार्यो मन्यते । नाम्नेत्युपलक्षणम् । एकविधगौणभक्तावन्यविधायास्तस्या अङ्गत्वसंभवात् । स्मर्यते हि पूजायां स्तुत्यादेरङ्गत्वम् । तथा च ' भक्त्या प्रयच्छति ' ( गी० ९-२६ ) इत्यादौ गौणभक्तिरेवार्थः ।

परे तु भक्तिनाम्ना-नमस्कारेण परभक्तिं भावयेदित्यादिरूपेणान्वयं जैमिनिर्मन्यते 'श्येनेनाभिचरन् यजेत' इत्यादाविव संभवादित्यभिप्रायं वर्णयन्ति । तेषामयमभिप्रायः—कर्मण्य उत्कर्षलाभाय नामकरणमात्र-

श्यकमिति। एतेन श्रवणकीर्तनाऽऽदिकमुद्दिश्य भक्त्येत्याराध्यत्वज्ञानानुरागाऽऽदिरूपसाधनभक्तिर्विधीयते श्रवणकीर्तनाऽऽदिकं यत्तत्र—नाराध्यबुद्ध्याऽनुरागेण वेति। अतोऽयं 'दध्ना जुहोति' इत्यादिवद्गुणविधिरेवेति निरस्तम्। वाजपेय इव विरुद्धत्रिकद्वयाऽऽपत्तिभियां तदभावात्। तथा हि 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र गुणविधिः कर्मनामधेयं वेति सन्देहे-समाहितम्, यद्ययं गुणविधिः स्यात्तर्हि वाजशब्दस्यान्नवाचित्वेन स एव गुणो वाच्यः। तथा सति तस्य तृतीयया यजत्यर्थं प्रति गुणत्वम्। यागस्य च द्रव्यं प्रति प्रधानता, तस्यैव यागस्य फलं प्रति कारणत्वेन गुणता। किमुद्दिश्य किं विधीयते इति विचारे यागमुद्दिश्य वाजपेयो विधीयत इति यागस्योद्देश्यत्वम्, द्रव्यं प्रति यागस्योद्देश्यत्वाज्ज्ञातत्वमज्ञातत्वञ्च विधेयत्वात्फलं प्रति, तथा च विरुद्धत्रिकद्वयमापद्येत, न चैतदेकस्यां प्रतीतावेकस्य युक्तम्, अतो वाजपेयशब्दः कर्मनामधेयमिति यथा, तथा प्रकृतेऽप्यनुरागाऽऽदिलक्षणभक्तिरूपगुणयुक्तायाः श्रवणाऽऽदिभक्तेः फलसाधनत्वे विवक्षिते तस्याऽऽनुरागाऽऽदिकं प्रति प्राधान्यात्फलं प्रति च गुणभावाद्विरुद्धत्रिकद्वयाऽऽपत्तिरनिवार्यैव स्यात्। तस्माद्भक्तिशब्दोऽत्र कीर्तनाऽऽदिभक्तिनामधेयमेव। 'दध्ना जुहोति' इत्यादौ तु होमप्रापकवाक्यान्तरस्यापि 'होत्रं जुहोति' इत्यस्य स्फुटत्वाद्गुणविधित्वमेव। नात्र तथेति संक्षेपः॥ ६॥

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥

इति पुंसाऽर्पिता विष्णोर्भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ (भाग.७,५,२३-२४)

इत्यत्र समुच्चयासमुच्चयसन्देहे नवलक्षणेतिकथनात्समुच्चय एवेति प्राप्त आह—

## अप्रयोगानां यथाकालसंभवो गृहाऽऽदिवत् ॥७॥

अप्रयोगानामिति। एकत्र प्रयोगानापन्नानां-श्रवणकीर्तनाऽऽदीनां यथाकालं संभव-उदयः, गृहाऽऽदिवत् । यथा गृहसाधनतृणाऽऽद्याहरणं कदाचित्समुच्चितं कदाचिन्न, तथा श्रवणकीर्तनाऽऽदिकं कदाचित्समुच्चितम् । यथाऽम्बरीषस्य—

स वै मनः कृष्णपदाऽरविन्दयो-
वचांसि वैकुण्ठगुणाऽनुवर्णने ।
करौ हरेर्मन्दिरमार्जनाऽऽदिषु
श्रुतिं चकाराऽच्युतसत्कथोदये ॥ (भा० ९-४-१८)

इत्यादि । कदाचिन्न समुच्चितम् । एकेनैव साध्याऽव्यभिचारश्रवणात् । यथा—

श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस्त्वभिवन्दने च हनुमान्दास्ये च सख्येऽर्जुनः
सर्वस्वाऽऽत्मनिवेदने बलिरभूत्कैवल्यमेषां समम् ॥ इति

तस्मात्समुच्चयो नाऽऽवश्यकः । एकप्रयोगाऽऽपन्नानामेव समुच्चयेनानुष्ठानादिति भावः । श्रद्धा साक्षाद्रूपा न तु कर्माऽऽद्यर्पणरूपा पारम्परिकी-विष्णावर्पिता तदर्थमेवेदमिति

भाविता न तु धर्माऽऽदिष्वर्पिता, एवं भूता चेत्क्रियेत, तदाऽनेन यदधीतं तदुत्तमं मन्य इत्यर्थः। तत्र श्रवणन्नाम सगुणस्य निर्गुणस्य वा शब्दकरणकशाब्दबोधस्तत्प्रतिपादकशब्दस्य श्रोत्रेण ग्रहणञ्च। कीर्तनम्—सगुणस्य निर्गुणस्य च बोधकशब्दस्योच्चारणम्। स्मरणम्—स एवंविधगुण इत्याद्याकारा स्मृतिः। पादसेवनम्—परिचर्या विष्णुप्रतिमापादसम्बन्धिगृहलेपनाऽऽदिरूपा गुरोरपि परमेश्वररूपत्वात्तस्य, भगवद्भक्तस्य वा पादसंवाहनरूपा च। अर्चनम्—श्रवणाऽऽदिभिन्नो विष्णुप्रीतिहेतुर्व्यापारः प्रतिमाऽऽदौ गन्धपुष्पाऽऽद्यर्पणरूपः। वन्दनम्—पूजाबहिर्भूतनमस्कारो गुरुशालग्रामप्रतिमाभगवद्भक्तानाम्। दास्यम्—दासस्येव परमेश्वरप्रीतिफलकं सकलकर्माऽर्पणम्।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ ( गी० ९-२७ )

इत्यादिना लौकिकवैदिकसकलकर्मार्पणस्य भगवति कर्तव्यत्वेनोक्तत्वात्। क्रियाया भगवत्प्रीतिमात्रफलकतापर्यवसानमेव हि परमेश्वरे परमगुरौ समर्पणम्। सख्यम्—विश्वासो मित्रवृत्तिश्चेति द्विविधम्। तत्राऽऽद्यं यथा महाभारते—

प्रतिज्ञा तव गोविन्द न मे भक्तः प्रणश्यति।
इति संस्मृत्य संस्मृत्य प्राणान्सन्धारयाम्यहम्॥ इति।

द्वितीयं बन्धुभावेन हिताऽऽशंसनम्। यथा अगस्त्यसंहितायाम्—

परिचर्यापराः केचित्प्रसादेषु च शेरते।
मनुष्यमिव तन्द्रष्टुं व्यवहर्तुं च बन्धुवत्॥ इति

आत्मनिवेदनम्—गवाश्वाऽऽदिस्थानीयस्य स्वस्य देहाऽऽदिसङ्घातस्य तदेकभजनाऽर्थं विक्रयस्थानीयं तस्मिन्नर्पणम् । यत्र तद्भरणपालनचिन्ताऽपि स्वयन्न क्रियते । एतदेवाऽर्पणपूर्वकं करणम् । यथा कस्मैचिद् दुग्धे देये गवां दानमिति । एवं

अहमेव परो विष्णुर्मयि सर्वमिदञ्जगत् ।
इति यः सततं पश्येत्तं विद्यादुत्तमोत्तमम् ॥
एकः समस्तं यदिहाऽस्ति किंचित्
तदच्युतो नाऽस्ति परन्ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥

इत्यादि बोध्यम् । सर्वस्य पृथक्सत्वनिरासादात्मनि विष्णौ समर्पणात् । अस्मिन्पक्षे स्त्री–पुत्राऽऽदिरूपे विष्णावर्पिता कृतैव भक्तिरधीयते न शास्त्रेण । यद्वा साक्षाद्विष्णुत्वेन क्रियते । तदोत्तममधीतं मन्य इति श्लोकाऽर्थः । अत एव

सर्वेषामेव भक्तानामिष्टः प्रियतमो मम ।
यो हि ज्ञानेन मां नित्यमाराधयति नाऽन्यथा ॥

इत्यादिवचनबलतः कर्ममिश्राऽऽदिभेदेन भक्तिविभागेषु ज्ञानमिश्रामेवोत्तमामाहुर्भगवताः । द्वैतभ्रमतिरस्कारतो मुक्तिपर्यवसायित्वात् । तथा हि । भक्तिर्द्वेधा विहिताऽविहिता च । तत्राऽविहिता रागाऽनुगा । रागाऽऽत्मिका कामाऽनुसृता या परमेश्वरेष्वारसिकी परमाऽऽविष्टता रागस्तन्मयी रागाऽऽत्मिका व्रजवासिजनेष्वभिव्यक्ता । सेयं द्विविधा । कामरूपा सम्बन्धरूपा

चेति। कामरूपा गोपीषु। सम्बन्धरूपा नन्दाऽऽदिषु पितृत्वाऽऽद्यभिमानमूला। अस्यां न शास्त्रविस्तरः। अथ विहिता श्रवणकीर्तनाऽऽदिरूपोक्ता। सा च त्रेधा। कर्ममिश्रा, कर्मज्ञानमिश्रा, ज्ञानमात्रमिश्रा च। तत्र कर्ममिश्रा सात्विकी राजसी तामसी चेति त्रेधा। तत्र सात्विकी त्रेधा। पापनाशार्था भगवत्प्रीत्यर्था विधिसिद्ध्यर्था च।

कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम्।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्विकः॥ (भा.४-२९-१०)

इति स्मृतेः। एतस्याश्च दास्यभक्तावन्तर्भावः। भगवदाज्ञापरिपालनरूपत्वेन भगवत्प्रीतिमात्रफलकनायां पर्यवसानात्। ननु कर्मनिर्हारः-पापक्षयः स्वगतं फलम्। तदर्थं क्रियमाणस्य कर्मणो दास्यरूपत्वे स्वगतस्वर्गकामनया क्रियमाणमपि दास्यं स्यादिति चेन्न। पापस्येश्वरं प्रत्याज्ञालङ्घनरूपापराधजन्यत्वेन तत्क्षयकामनया क्रियमाणस्य कर्मणो दासत्वसंभवात्। अपराधिनो हि प्रभुं प्रति दास्यमाचरन्तोऽपराधान्मुच्यन्त इति लोके दृष्टम्। तथा च स्वगतसुखमनुद्दिश्य विहितं कर्म कुर्वतां दासत्वं नेतरेषाम्। अत एवोक्तम्—

यस्ते आशिष आशास्ते न स भृत्यः स वै वणिक्। इति।

राजसी त्रेधा। विषयाऽर्था, यशोऽर्था, ऐश्वर्याऽर्था चेति।

विषयानभिसन्धाय यश ऐश्वर्यमेव च।
अर्चाऽऽदावर्चयेद्यो मां पृथग्भावः स राजसः॥

इति स्मृतेः। एवन्तामसी त्रेधा। हिंसाऽर्था, दम्भाऽर्था, मात्सर्याऽर्था च।

दास्यभक्तौ राजसतामसभक्त्योस्तु योग्यतयाऽर्चनभक्तावेव निवेशो बोध्यः । कर्तृगतसुखफलकत्वात् । इत्यास्तां विस्तरः । कर्मज्ञानमिश्रा त्रेधा । उत्तमा मध्यमा प्राकृता च । सत्वतारतम्यात् । तत्रोत्तमः—

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येप भागवतोत्तमः ॥ (भा० ११-२-४५)

इति सर्वभूतग्रहणसमयेऽपि द्रवावस्थाप्रविष्टभगवदाकारताया एव प्रकाशमानत्वाज्जतुरङ्गवत्सर्वभूतेषु भगवद्भावनोपपत्तेरयं भागवतोत्तमः । तादृशसंस्कारस्यानपायादिति भावः । एतादृशभानान्यथानुपपत्त्या प्राक् पूर्णा द्रवाऽवस्था प्रतीयते । ईषद्द्रवाऽवस्थायान्तु मध्यमः ।

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेम मैत्री कृपोपेक्षा यः करोति स मध्यमः ॥ (भा० १२-२-४६)

इत्युक्तः । एतादृगवस्थातोऽग्रे पूर्णद्रवावस्थाया उत्पत्स्यमानत्वादिति भावः । यस्य तु चित्ते न द्रवावस्था पुष्टा नापीषदुत्पन्ना । किन्तु तदर्थं भागवतधर्मान् श्रद्धयाऽनुतिष्ठति स काठिन्यावस्थाविनाशसामग्र्या विशिष्टः प्राकृतः ।

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ (भा० ११-२-४७)

इत्युक्तः । प्रकृतिश्चाऽऽरम्भस्तस्यां वर्तमानः प्राकृतः । प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः । अत्रोत्तमाया आत्मनिवेदने, मध्यमाया दास्ये, प्राकृताया अर्चनेऽन्तर्भावो बोध्य इति संक्षेपः ।

ज्ञानमात्रमिश्रा—

मद्‌गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाऽम्भसोऽम्बुधौ॥इति(भा० ३-२९-११)

अत्राऽविच्छिन्नेति धारावाहिकता दर्शिता। यथा गङ्गाऽम्भस इति दृष्टान्तेन मनस्यपि धारावाहिको द्रवावस्था। मयि सर्वगुहाशये मनोगतिरिति सर्वेशाऽऽकारता। तेनाद्रवाऽवस्थायां धारावाहिक्यपि वृत्तिर्द्रवाऽवस्थायामपि आशुविनाशिनी सा, द्रवत्वधारावाहिकत्वयुक्ताऽपि सर्वेशाविषया न भक्तिरित्युक्तम्। सोऽयं द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य त्रिविधत्वात् त्रिविधः। तत्राऽऽद्यः प्रपञ्चसत्यत्वभानसहितः। यथा—

खं वायुमग्निं सलिलं महीं च ।
ज्योतींषि सत्त्वाणि दिशो द्रुमाऽऽदीन्॥
सरित्समुद्रांश्च हरेः शरीरम् ।
यत्किञ्च भूतं प्रणमेदनन्यः॥ (भा० ११-२-४१)

इत्यादि। अनेन प्राकृतो भागवतोत्तम उक्तः। द्वितीयः प्रपञ्चमिथ्यात्वभानसहितः। यथा—

तस्मादिदञ्जगदशेषमसत्स्वरूपं
स्वप्नाऽऽभमस्तधिषणं पुरुदुःखदुःखम्॥
त्वय्येवनित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत्सदिवावभाति॥ (भा० १०-१४-२२)

अनेन मध्यमो भागवतोत्तम उक्तः। तृतीयः प्रकारद्वयेनापि प्रपञ्चभानविरहितः। यथा—

ध्यायतश्चरणाऽम्भोजं भावनिर्जितचेतसा ।
औत्कण्ठ्याऽश्रुकलाऽक्षस्य हृद्यासीन्मे शनैर्हरिः ॥
प्रेमाऽतिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्भरः ।
आनन्दसंप्लवे लीनो नाऽपश्यमुभयं मुने ॥ इति (भा० १-६-१७-१८

अनेनोत्तमो भागवतोत्तम उक्तः । एवं मध्यमाऽऽदिभेदाः स्वयमुदाहार्याः । तथा च साधनपरिपाकेनोत्तरोत्तरभूमिलाभः । तत्र कर्ममिश्रा गृहस्थानां, कर्मज्ञानमिश्रा वानप्रस्थानां, ज्ञानमात्रमिश्रा भिक्षुणाम् ।

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णयोगानां कर्मयोगस्तु कामिनाम् ॥
यदृच्छया मत्कथाऽऽदौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नाऽतिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ (भ० ११-२०-७-८)

इति स्मृतेः । अत्रानिर्विण्णानां न्यासिनां कर्मसु सत्सु ज्ञानयोगः । कर्मज्ञानयोग इत्यर्थः । तादृशस्य भक्तिः कर्मज्ञानमिश्रा । निर्विण्णस्य तु कर्मपरित्यागतो ज्ञानम् । तादृशस्य ज्ञानमात्रमिश्रा सर्वोत्तमा । परमोत्कृष्टसाध्यसाधनकत्वात् । सेयं वैधी भक्तिरेकाङ्गाऽनेकाऽङ्गा वा परतत्त्ववैमुख्यपरिहारेण परभक्त्येऽवश्यमेव सम्पादनीयेति ग्रन्थतात्पर्यार्थः ॥ ७ ॥

तेष्विदमेवाऽऽवश्यकमित्यपि नियमो नाऽस्तीत्यभिप्रेत्याऽऽह—

## ईश्वरतुष्टेरेकोऽपि बली ॥ ८ ॥

ईश्वरेति । कीर्तनाऽऽदिषु यः कश्चिदेकोऽप्यभ्यासाऽनुरागाऽऽदिगुणयुक्ततयेश्वरतुष्टिविशेषजनकश्चेत्स एव बली सर्वार्थदः ।

'मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' (भ. गी. १८-५८) इत्यादि प्रमाणादिति भावः। न च प्रत्येकं व्यभिचारः। तृणारणिमणि न्यायेन कारणत्वस्य विवक्षितत्वादित्यास्तां विस्तरः। एवमत्र बलित्व-कथनेन क्लेशघ्नत्वं सुखदत्वं च ज्ञापितम्। तथा हि क्लेशः कर्माशय-स्तद्बीजमविद्याऽस्मितारागद्वेषाऽभिनिवेशाश्च। तत्र कर्माऽऽशयः प्रारब्धाऽप्रारब्धभेदेन द्विविधः। तत्र प्रारब्धहरत्वं यथा तृतीये—

यन्नामधेयश्रवणाऽनुकीर्तना— ।
यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ॥
श्वादोऽपि सद्यः सवनाय कल्पते ।
कुतः पुनस्ते भगवन्नु दर्शनात् ॥ इति । (भा. ३-३३-६)

दुर्जातिरेव सवनायोग्यत्वे हेतुः ।
दुर्जात्यारम्भकं पापं भवेत्प्रारब्धमेव तत् ।

अप्रारब्धहरत्वं यथैकादशस्कन्धे—

यथाऽग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ इति । (अ. १४-१९)

अविद्याहरत्वं यथा चतुर्थे—

यत्पादपङ्कजपलाशविलासभक्त्या ।
कर्माऽऽशयं ग्रथितमुद्ग्रथयन्ति सन्तः ॥
तद्वन्न रिक्तमतयो यतयो निरुद्ध- ।
स्रोतोगणास्तमरणं भज वासुदेवम् ॥ (अ. २२-३९)

बीजहरत्वं यथा षष्ठे—

तैस्तान्यघानि पूयन्ते तपोदानव्रताऽऽदिभिः ।

नाऽधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ इति । (अ.२-१७)

सुखदत्वं यथा तन्त्रे—

सिद्धयः परमाऽऽश्चर्या भुक्तिर्मुक्तिश्च शाश्वती ।
नित्यं च परमाऽऽनन्दं भवेद् गोविन्दभक्तितः ॥

एवं सद्गुणाऽऽदिप्रदत्वमपि बोध्यम् ।

यथा पञ्चमे—

यस्याऽस्तिभक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिः ॥ इति । (अ.१८-१२)

तथा भगवदाकर्षकत्वमपि, यथा एकादशे—

न साधयति मां योगो न साङ्ख्यं धर्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ (अ.१४-२०)

इति दिक् ॥ ८ ॥

कदा क्लेशघ्नत्वलक्षणं बलमित्याशङ्क्य 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' । ( भ. गी. २-४० ) इति प्रमाणाद्यदा परमेश्वरप्रीत्युद्देशेन क्रियते तदैवेत्यभिप्रेत्याऽऽह—

## अबन्धोऽर्पणस्य मुखम् ॥ ९ ॥

अबन्ध इति ।

प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।

करोति सततं बुद्ध्या ब्रह्माऽर्पणमिदं परम् ॥ इति ।

यथोक्ताऽर्पणघटितस्यैवाऽबन्धो-बन्धाऽभावोऽखिलक्लेशाविध्वंस-रूपो, मुखं-द्वारं ब्रह्माऽवाप्तिलक्षणकैवल्य इति शेषेणाऽर्थः ।

ब्रह्माऽर्पणं ब्रह्म हविर्ब्रह्माऽग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ( भ.गी. ४-२४ )

इत्यपि ब्रह्मार्पणं बोध्यम् । वस्तुत एतादृशस्यैव ब्रह्मप्रापकत्व-श्रवणात् ॥ ९ ॥

गीतायान्द्वादशाऽध्याये—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ( श्लो० २-४)

इत्युपक्रम्य—

ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ (श्लो० २-६ )

इत्युक्त्या ध्यानमप्यङ्गं भक्तौ लभ्यते । तत्र 'य एषोऽन्तरा-दित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः' । (छां.१-६-६)

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजाऽऽसनसन्निविष्टः ।

केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ (नार० पं० ११-७१)

इत्येवंरूपमेव किं ध्येयं सगुणम्, उत रूपाऽन्तरमेव । यथा—

सौरिमण्डलमध्यस्थं साम्बं संसारभेषजम् ।
नीलग्रीवं विरूपाऽक्षं नमामि शिवमव्ययम् ॥ इत्यादि ।

अथवा निर्गुणमेव । यथा—

एकं ज्योतिर्मयं शुद्धं सर्वगं व्योमवद्दृढम् ।
अव्यक्तममलं नित्यमादिमध्याऽन्तवर्जितम् ॥
स्थूलसूक्ष्ममनाकाशमसंस्पर्शमचाक्षुषम् ।
न रसं न च गन्धाऽऽढ्यमप्रमेयमनूपमम् ॥
आनन्दमजरं नित्यं सदसत्सर्वकारणम् ।
सर्वाऽऽधारं जगद्रूपममूर्तमजमव्ययम् ॥
अदृश्यं दृश्यमध्यस्थं बहिःस्थं सर्वतोमुखम् ।
सर्वदृक् सर्वतःपादं सर्वस्पृक् सर्वतःशिरः ॥
ब्रह्म ब्रह्ममयोऽहं स्यामिति तत्त्वस्य वेदनम् ॥ इति ।

तत्राऽऽह—

## ध्याननियमस्तु दृष्टसौकर्यात् ॥ १० ॥

ध्यानेति । तुशब्दो नकारार्थः । इदमेव ध्येयमिति ध्येयनियमो ध्याने नास्तीत्यर्थः । कुतः दृष्टसौकर्यात् । यथाऽभिमतध्यानादेव चित्तप्रसादरूपदृष्टसौकर्यसम्भवात् । तथा च यस्य यद्रूपध्यानादेवाऽऽनन्द आविर्भवति तेन तदेव रूपमभिमतं ध्यातव्यमिति भावः । एतदभिप्रेत्यैव भगवान्पतञ्जलिरप्याह—"यथाऽभिमतध्याना-

द्वा'' इति ( यो० सू० १-३९ )। अथवा 'ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि' इति दिङ्नियमः। 'प्राचीनप्रवणेन वैश्वदेवेन यजेत' इति देशनियमः। 'अपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति कालनियमस्तदेतत्त्रयं यथा कर्मणि दृश्यते तथा ध्यानेऽप्यस्ति न वेति सन्देहेऽस्तीति प्राप्तम्। वैदिकत्वस्याविशेषात्। इत्थं च तत्साध्यायां भक्तावपि देशकालनियमः प्राप्त इत्यत आह—ध्यानेति। दिग्देशकालनियमो ध्याने नास्ति। कुतः दृष्टसौकर्यात्। मनोऽनुकूलदेशकालाऽऽदिकं दृष्टसौकर्यन्तस्माद्ध्यानस्य सम्भवादित्यर्थः।

अयं भावः। ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनम्। न च तस्य दिगादिनियत्या कश्चिदतिशयो विद्यतेऽतो नास्ति नियमः। अत एव श्रुतिर्योगाऽभ्यासाय प्रदेशं निर्दिशन्ती मनोऽनुकूल इत्येवाऽऽह—'यस्मिन्देशकालाऽऽदौ मनस ऐकाग्र्यं तत्रैव युञ्ज्यात्'। न तु शास्त्रेण नियमतः कश्चिद्देशकालादिरस्तीत्यर्थः। 'समे शुचौ वह्निवालुकाविवर्जिते' इत्यादिदेशविशेषः श्रूयत इति चेत्सत्यम्। प्राणाऽऽयामाऽर्थन्तदिति बोध्यम्। अन्यथा रोगप्रसङ्गादिति। तस्मान्नास्ति ध्याने देशकालाऽऽदिनियमः। आह चैवं भगवान् बादरायणोऽपि 'यत्रैकाऽग्रता तत्राऽविशेषात्' (वे०सू०४-१-११) इति। अतो ध्याननिर्वर्त्यायां भक्तावपि न दिगादिनियम इति भावः ॥१०॥

## तद्याजिः पूजायामितरेषान्तु नैवम् ॥ ११ ॥

तद्याजिरिति। 'मद्याजी मां नमस्कुरु' (भ. गी. ९-३४) 'यान्ति मद्याजिनोऽपि माम्' ( भ. गी. ९-२५ ) इत्यादौ परमेश्वरयजिः पूजायां प्रयुक्तो मन्तव्यः। यज देवपूजासङ्गतिकरणदाने-

ष्विति पाठात् । इतरेषां—गौणभजनानां, नैवम्—न पूजा-तुल्यतया यजिव्यपदेश्यत्वम् । मुख्यपूजायागस्योपादानसम्भवेऽमुख्यग्रहणमन्याय्यम् । नमस्काराऽऽदिसाहचर्यमप्यत एव सुतरामुपपन्नं भवतीति भावः । उपलक्षणं चैतदन्येषामपि यागानाम् । तेषामपि प्रीतिफलकवद्दानत्वेन यज्यर्थत्वात् । न च तेषां प्रीतिफलकत्वे मानाऽभावः ।

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ (भा. १०-४७-२४)
वर्णाऽऽश्रमाऽऽचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते नाऽन्यः पन्थास्तत्तोषकारणम् ॥

इत्यादिवाक्यस्यैव मानत्वात् ॥ ११ ॥

पूजाप्रसङ्गादधिकरणचतुष्कम्—

## पादोदकन्तु पाद्यमव्याप्तेः ॥ १२ ॥

पादोदकमिति ।

गङ्गाप्रयागपुष्करनैमिषाणि ।
पुण्यानि यानि कुरुजाङ्गलयामुनानि ॥
कालेन तीर्थसलिलानि पुनन्ति पापा-
त्पादोदकं भगवतः प्रपुनाति सद्यः ॥ (नृ. पु. ५९-४६)

इत्यादिना पावनत्वेनोक्तं पादोदकं पाद्यरूपमेव । पादसंयुक्तजलस्य पादोदकत्वे शालग्रामपूजायां पादोदके तत्पाद्ये (च) पादोदकव्यवहाराऽनापत्तेश्चेति भावः ॥ १२ ॥

भगवते स्वयमर्पितं नैवेद्यं ग्राह्यन्नवेति सन्देहे-न ग्राह्यम् ।

दत्ताऽपहारिताप्रसङ्गादिति प्राप्त आह—

## स्वयमप्यर्पितं ग्राह्यमविशेषात् ॥ १२ ॥

स्वयमपीति। पूजायां भगवते दत्तन्नैवेद्यं निर्माल्याऽऽदिकं स्वयमपि ग्राह्यमेव। कुतः अविशेषात्—भागवद्-भागवतत्वाऽविशेषादित्यर्थः। तथा—

विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितम्।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम्॥

इत्यादिना भागवतेभ्यो नैवेद्यनिर्माल्याऽऽदिप्रतिपत्तेर्विधानाद्स्याऽपि तद्वदेव भागवतत्वान्नैवेद्याऽऽदिग्रहणमुचितमेवेति भावः। अत एवानिवेदिताऽन्ननिन्दा तद्भोजने निषेधश्च श्रूयते—

अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम्।
न तत्स्वयं समश्नीयाद्यद्विष्णोर्न निवेदितम्॥

'यन्न दद्यान्न तदश्नीयात्' इत्यादि। न च दत्ताऽपहारिताप्रसङ्गः। इदं ममेत्यादिना देवतोद्देशेन त्यक्तद्रव्यपरिग्रहण एव दत्ताऽपहारित्वप्रसक्तेः। 'भवदीयमेवेदमनुजानातु' भवान् इत्यादिरूपं चेतोवृत्तिविशेषं निवेदनं कृत्वा ग्रहणे तु न तत्प्रसक्तिः—

गन्धान्नवरभक्ष्यांश्च स्रजो वासांसि भूषणम्।
दत्वा तु देवदेवाय तच्छेषाण्युपभुञ्जत॥

इत्यादिवाक्यपर्यालोचनतस्तथावगमात्। अत एव दत्तजातीयमेकराश्यवशिष्टमपि भुञ्जीतेति यतोऽन्योद्देशेन त्यक्तस्यापि-'उत्तराऽर्धात्स्विष्टकृतेऽवद्यति' 'यजमानपञ्चमाः पुरोडाशं भक्षयन्ति'

इत्यादिवाक्यैः प्रतिपत्तिपरैरविशेषात् । 'नोपयुञ्ज्यान्निवेदितम्' इत्यादीनान्तु यावद्देवोपयोगं तद्ग्रहणरूपप्रतिपत्तिनिषेधकत्वान्न तैर्विरोध इति मन्तव्यम् । ननु प्रतिपत्तिः स्वस्वत्वाऽऽपादिका, न वा । अन्त्ये परस्वग्रहणनिबन्धनमिष्टं स्यात् । आद्ये स्वसत्त्वानुकूलव्यापारत्वात् 'सात्वतेभ्यो ददाति'इतिवत्स्वस्मै ददातीत्यपि स्यात् । तथा च सर्वत्र 'ब्राह्मणेभ्यो दद्यात्' इत्यादिना ब्राह्मणत्वादात्मनेऽपि दानप्रसङ्ग इति चेन्मैवम् । दानस्य स्वस्वत्वध्वंसेन परस्वत्वाऽऽपादनरूपत्वात् । प्रतिपत्तौ तु नैवम् । स्वस्वत्वाऽऽपादनमात्रत्वात् । तस्मात्स्वयं ग्रहणेऽपि न दोष इत्यास्तां विस्तरः ॥ १३ ॥

पूजायामपराधवर्जनतत्प्रायश्चित्तयोरपि विहितत्वात्तत्र व्यवस्थामाह—

## निमित्तगुणव्यपेक्षणादपराधेषु व्यवस्था ॥ १४ ॥

निमित्तेति । अपराधाः केचिद्विहितकर्मसम्बन्धेनाऽधीताः । केचिदन्यथाऽधीताः । तेष्वाद्यानां क्रत्वपकारकत्वम् । तद्वाक्यशेषे नरकाऽऽदिफलश्रुतिस्तु निन्दाऽर्थवादमात्रम् । अन्त्यानां पुरुषाऽनर्थाऽऽपादकत्वम् । तथा तत्तत्प्रायश्चित्तानामपि क्रत्वर्थत्वं पुरुषाऽर्थत्वं मन्तव्यम् । अक्षराऽर्थस्तु—निमित्तं–ज्ञापकं शास्त्रं, तस्य गुणः पूर्वोक्तं द्विविधमधीतत्वम् । तदनुसारादपराधेषु–निषिद्धेषु क्रत्वपकारकत्वपुरुषापकारकत्वव्यवस्थेति ।

तत्र—'देवपूजाऽपराधास्ते द्वात्रिंशत्परिकीर्तिताः'(व०-पु० १२४-४)। इत्यादयः प्रथमाः। 'सतां निन्दा नाम्नः परममपराधं वितनुते '। इत्येवमादयो द्वितीयाः। तत्र द्वात्रिंशदपराधा यथा—

यानैर्वा पादुकैर्वाऽपि गमनं भगवद्गृहे ।
देवोत्सवाऽऽद्यसेवा च अप्रणामस्तदग्रतः ॥
एकहस्तप्रणामश्च तत्पुरस्तात्स्वदक्षिणम् ।
उच्छिष्टे च तथाऽऽशौचे भगवद्वन्दनाऽऽदिकम् ॥
पादप्रसारणं चाऽग्रे तथा पर्यङ्कबन्धनम् ।
शयनं भाषणं चैव मिथ्याभाषणमेव च ॥
उच्चैर्भाषा वृथा जल्पो रोदनाऽऽदि च विग्रहः ।
निग्रहाऽनुग्रहौ चैव स्त्रीष्वसत्कृतभाषणम् ॥
अश्लीलकथनं चैव अधोवायुविमोचनम् ।
कम्बलाऽऽस्तरणं चैव परनिन्दा परस्तुतिः ॥
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् ।
तत्तत्कालोद्भवानां च फलाऽऽदीनामनर्पणम् ॥
तथा दानं च कर्मण्यपुष्पाऽऽदीनां विपर्ययात् ।
दानं च देवतानिन्दा गुरौ मौनं निजस्तुतिः ॥ इति ।

विपर्ययाद् दानगन्धमाल्यान्यदत्वा धूपाऽऽद्यर्पणरूपम् । एवमन्येऽपराधा देवर्षीणामभिमुखे जृम्भणाऽऽक्रोशनप्रभृतयो द्रष्टव्याः॥१४॥

पूजायां पत्राऽऽदेरपि दानं श्रूयते । तत्किं पुष्पदानाऽऽदिना तुल्यफलं नवेति सन्देहे 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' ( भ. गी. ९-२६ ) इतिश्रवणात्तुल्यफलमिति प्राप्त आह—

**पत्राऽऽदेर्दानमन्यथा हि वैशिष्ट्यम् ॥ १५ ॥**

पत्राऽऽदेरिति । अन्यथाऽशक्तौ पत्राऽऽदेर्दानं पुष्पाऽऽदिस्थान इति शेषः । हि—यतो, वैशिष्ट्यं—मुख्यता । पुष्पाऽऽदिदान-

स्येति शेषः । तथा च शक्तस्य न पुष्पाऽऽदिदानतुल्यं पत्राऽऽदि-दानम् । अशक्तस्य तु भवति । मुख्यानुकल्पयोस्तथैवान्यत्र व्यवस्थापनादित्यास्तां विस्तरः ।

परे त्वत्र—

यद्यदिष्टतमं लोके यच्चान्यदपि ते गृहे ।
तत्तद्धि देयं प्रीत्यर्थं देवदेवाय चक्रिणे ॥

इत्यादिना प्राप्तस्य भगवदुद्देश्यकसर्वदानस्य भक्त्यङ्गत्वविधिः । अन्यथा पत्राऽऽदिचतुष्टयविशिष्टविधानं स्यात् । प्रत्येकविधौ वाक्यभेदात् । तस्मात्पत्राऽऽदिशब्देन प्राप्तं दानमनूद्य 'उपव्ययते' ( तै. सं. ) इत्यनेनोपवीतस्य दर्शाऽङ्गत्ववद्भक्त्यङ्गत्वविधिरेव युक्त इत्यभिप्रायं वर्णयन्ति । तत्सुधीभिः परिशीलनीयम् ॥ १५ ॥

ननु स्वस्ववर्णाऽऽश्रमोचितकर्माऽऽचरणमपि पुमर्थहेतु भवति किमितिश्रवणकीर्तनाऽऽदिष्वेवाऽऽग्रहस्तत्राऽऽह—

## सुकृतजत्वात्परहेतुभावाच्च क्रियासु ताः श्रेयस्यः ॥ १६ ॥

सुकृतेति । ताः—श्रवणकीर्तनाऽऽदिभक्तयः, क्रिया–सुस्वस्व-वर्णाऽऽश्रमोचितशुक्लकृष्णक्रियाऽपेक्षया श्रेयस्य इति श्रेष्ठाः केवलं शुक्लतयैकान्तिकाऽऽत्यन्तिकपुमर्थहेतुत्वात् । एतदभिप्रेत्यैवोक्तं श्रीभागवते—

त्यक्त्वा स्वधर्मं चरणाऽम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत्ततो यदि ॥

यत्र क्व वा भद्रमभूदमुष्य किं
को वाऽर्थ आप्तो भजतां स्वधर्मतः ॥इति। (स्कं. १-५-१७)

अत्र हित्वैवेति न साऽवधारणम् ।

वर्णाऽऽश्रमाऽऽचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणम् ॥

इत्यादिवाक्यनिकरेण वर्णाऽऽश्रमाऽऽचारपूर्वकभजनस्येशप्रसाद-हेतुत्वकथनात् । किन्तु स्वधर्मं हित्वाऽपि भजतां नाऽभद्रम् । स्वधर्ममात्रतो भजतां को वाऽधिकाऽर्थ इति । स्वधर्मं हित्वाऽपि भजतां गोपीप्रभृतीनां—

तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः ।
जहुर्विरहजन्तापं सद्यः प्रक्षीणबन्धनाः ॥ (भा. १०-२९-११)

इति कृतार्थताश्रवणात् । अत एवोत्कटप्रेमवतां न साधना वृत्तिः । यथोक्तन्तत्रैव—

सकृन्मनः कृष्णपदाऽरविन्दयो—
निवेशितन्तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ इति। (भा. ६-१-१९)

ननु तर्हि स्वधर्माऽऽचरणं व्यर्थन्तत्राऽऽह—सुकृतजत्वादिति । बहुनरसुकृतस्यैवेदं फलं यद्धरिभजनम् । तदुक्तं पुराणेषु—

येन जन्मशतैः पूर्वं वासुदेवः समर्चितः ।
तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत ॥

नह्यपुण्यवतां लोके मूढानां कुटिलाऽऽत्मनाम् ।
भक्तिर्भवति गोविन्दे स्मरणं कीर्तनन्तथा ॥

इत्यादि । सुकृतजत्वं स्वर्गाऽऽद्यावप्यस्ति तेन किं तत्राऽऽह–परहेतुभावाच्चेति । प्रागुक्तदिशा तासां परभक्तिहेतुत्वात् । वक्ष्यमाणयुक्त्या ज्ञानद्वारा कैवल्यहेतुत्वाच्च श्रेष्ठत्वमिति भावः ॥ १६ ॥

ननु भक्तीनां गौणमुख्यभावोऽयुक्तः । 'चतुर्विधा भजन्ते माम्' (भ. गी. ७-१६) इत्यादिना भगवता तुल्यवदभिधानादित्यत आह—

**गौणत्रैविध्यमितरेण स्तुत्यर्थत्वात्साहचर्यम् ॥ १७ ॥**

गौणेति । गौणत्रैविध्यमेव तासां पापक्षयाऽऽद्यर्थं विधानात् । तर्हि ज्ञानी चेति मुख्यसाहचर्यं कुतस्तत्राऽऽह स्तुत्यर्थत्वादिति । स्तुतेरर्थत्वात्प्रयोजनत्वात्साहचर्येण तुल्यताबोधद्वारा प्राशस्त्यप्रत्यायनम् । यथा राजसमभिव्याहारेणामात्यानामिति भावः । तत्र पापक्षयविपद्धाराऽऽदि निमित्तम् श्रवणकीर्तनाऽऽद्यार्तभक्तिः । ज्ञानाऽर्थंवेदाऽऽभ्यसनाऽऽदिकं जिज्ञासोर्भक्तिः । राज्यस्वर्गाऽऽद्यर्थं क्रियमाणा कीर्तनजपाऽऽदिरूपाऽर्थाऽर्थिनो भक्तिः । प्रेमोत्पत्तये ज्ञानलक्षणा ज्ञानिनो भक्तिः सर्वाभ्यस्ताभ्यो मुख्या । साक्षात्प्रेमहेतुत्वस्य स्वरूपज्ञानेऽन्वयव्यतिरेकाभ्यां लोके ग्रहादिति संक्षेपः ॥ १७ ॥

ननु कीर्तनाऽऽदीनां मुक्तिहेतुविलक्षणपरभक्तयङ्गत्वे कथं स्वतन्त्रफलार्थत्वन्तत्राऽऽह—

**बहिरन्तस्थमुभयमवेष्टिसववत् ॥ १८ ॥**

बहिरन्तस्थमिति । कीर्तनाऽऽदिकं बहिःस्थं पापक्षयाऽऽदि-लक्षणस्वतन्त्रफलाऽर्थम् । अन्तस्थं परं भक्तिलक्षणप्रधानाऽङ्गश्चे-त्युभयमपि भवति । यथा राजसूयाऽन्तर्गताऽप्यवेष्टिर्वर्णत्रय-संयोगात्स्वतन्त्रफलार्था । यथा वा बृहस्पतिसवः क्वचित्प्रधान-मपि वाजपेयाङ्गं तद्वदित्यर्थः । एतेन—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

इत्याद्युक्तं सर्वकर्माङ्गत्वमपि स्मरणकीर्तनाऽऽदेर्व्याख्यातम् । तत्तत्प्रकरणपठितानामपि फलाऽन्तरश्रवणाद्बहिर्भावेनोत्कर्षस्य प्रमा-णसिद्धत्वात् । तत्र—

व्रजंस्तिष्ठन्स्वपन्नश्नन्श्वसन् वाक्यप्रपूरणे ।
नामसङ्कीर्तनं विष्णोर्हेलया कलिबन्धनम् ॥
कृत्वा सरूपतां याति भक्तियुक्तः परं व्रजेत् ।

इत्यन्तःस्थत्वज्ञापकम् ।

सर्वमङ्गलमाङ्गल्यमायुष्यं व्याधिनाशनम् ।
भुक्तिमुक्तिप्रदं दिव्यं वासुदेवस्य कीर्तनम् ॥

इति बहिःस्थत्वज्ञापकम् । एवम्—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ (भा.२-३-१०)

इत्युभयज्ञापकं बोध्यम् ॥ १८ ॥

बहिःस्थत्वे हेत्वन्तरमाह—

**स्मृतिकीर्त्योः कथाऽऽदेश्चार्तौ प्रायश्चित्तभावात् ॥१९॥**

स्मृतिकीर्त्योरिति । कथाऽऽदेरित्यादिना नमस्कारपरिचर्याऽऽदिपरिग्रहः । तथा च स्मरणकीर्तनकथानमस्कारप्रभृतीनामार्तौ महापातकाऽऽदिविषयकाऽनुतापे सति प्रायश्चित्तरूपतया विधानादपि बहिःस्थत्वं सिध्यतीत्यर्थः । तथा हि—

पापे गुरूणि गुरूणि लघूनि च लघुन्यपि ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवाऽऽदयः ॥
प्रायश्चित्तान्यशेषाणि तपःकर्माऽऽत्मकानि वै ।
यानि तेषामशेषाणां कृष्णाऽनुस्मरणं परम् ॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥

सर्वाऽऽश्रमाऽभिगमनं सर्वतीर्थाऽवगाहनम् ।
तथा न फलदन्तत्ते नारायणकथा यथा ॥

पाविताङ्गाः सुसंवृत्ताः श्रुत्वेमामादितः कथाम् ।
नारायणाऽऽश्रयां पुण्यां सर्वपापप्रणाशिनीम् ॥

इत्यादिवाक्यानि प्रायश्चित्तभावबोधकानि । वस्तुतः स्मृतिकीर्तनकथाऽऽदिभक्तेः कस्यां भक्तौ सन्निवेश इत्याशङ्कायामाह— स्मृतिकीर्त्योरिति । उक्तवाक्यैः पापकृतां नरकाऽऽर्तिमतां पापक्षयसाधनत्वेन स्मृत्यादेरुक्तत्वादार्तभक्तावेव सन्निवेश इति सूत्रकृदभिप्राय इत्यास्तां विस्तरः ॥ १९ ॥

प्रायश्चित्ताऽनन्तरवैफल्यमाशङ्क्य परिहरति—

भूयसामनुष्ठितिरिति चेदाप्रायणमुपसंहारान्महत्स्वपि ॥ २० ॥

भूयसामिति। ननु स्मृतिकीर्तनाऽऽदीनामल्पपापविषयत्वं युक्तम्। अन्यथा भूयसां बहुवित्तव्ययाऽऽयाससाध्यानां कर्मणामननुष्ठानाऽऽपत्तिरिति चेत्। आप्रायणमामरणं स्मृतिकीर्तनाऽऽदेः कर्तव्यतयोपसंहारान्महत्स्वपि पापेषु निमित्तेषु प्रायश्चित्ताभावः। तथा चोक्तम्—

तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने।
न याति नरकं शुद्धः संक्षीणाऽखिलकल्मषः॥
मा ऋचो मा यजुस्तात! मा साम पठ किञ्चन।
गोविन्देति हरेर्नाम गेयं गायस्व नित्यशः॥
आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम्।
पापक्षयश्च भवति स्मरतां तमहर्निशम्॥
गोविन्देति सदा युक्तः कीर्तयेद्यस्त्वनन्यधीः।
पावनेन च धन्येन तेनेयं पृथिवी धृता॥
हरे! केशव! गोविन्द! वासुदेव! जगत्पते।
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः॥
येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम्।
कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान्॥
मम नामानि लोकेऽस्मिञ्छ्रद्धया यस्तु कीर्तयेत्।
तस्याऽपराधकोटीस्तु क्षमाम्येव न संशयः॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥

इत्यादि । एवञ्च क्लेशाऽधिकमत्राऽप्यस्तीति भावः । यत्तु

पराकचान्द्रायणतप्तकृच्छ्रै-
र्न देहशुद्धिर्भवतीह तादृक् ।
कलौ सकृन्माधवकीर्तनेन
गोविन्दनाम्ना भवतीह यादृक् ॥
हत्यायुतं पानसहस्रमुग्रं
गुर्वङ्गनाकोटिनिषेवणञ्च ।
स्तेयान्यनेकानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्यः ॥

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव च ।
वैकुण्ठनामग्रहणमशेषाऽघहरं विदुः ॥

इत्यादिना यथाकथञ्चिद्यत्र क्वाऽपि च यादृशतादृशेनाऽपि कृतेन कीर्तनेन सद्यः सकलपापक्षयः श्रूयते । तदपि

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥

इत्यादिवाक्याऽनुसारादन्तर्मुखस्य, बहिर्मुखस्य तु म्रियमाणस्यैव न सर्वस्य-

विक्रुश्य पुत्रमघवान्यदजामिलोऽपि
नारायणेति म्रियमाण

इत्यादिवाक्यतात्पर्यपर्यालोचनतस्तथाऽवधारणात् । युक्त-श्चैतत् । अन्यथा

नामैकं वाचि यस्य स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाऽशुद्धवर्णं व्यवहितरहितं तारयत्येव सत्यम् ।
तच्चै देहद्रवणजनतालोभपाखण्डमध्ये
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवाऽत्र विप्र ॥

इत्यादिवचनविरोधाऽऽपत्तेरिति वदन्ति । परे तु साङ्केत्य-पारिहास्येत्याद्युक्तं सर्वान्प्रति सममेव । धर्मशास्त्रोक्तप्रायश्चित्तन्तु विभीषिकामात्रं पापे यथेष्टप्रवृत्तिवारणाय । तदुक्तं स्कान्दे—

अल्पसाध्येऽपि दुःसाध्यं श्रावयेत्सततं जने ।
यथा न पापे वर्तेरन् प्रायश्चित्तभयादिति ॥
न निर्दिशेदल्पसाध्यं प्रायश्चित्ताऽन्तरं बुधः ।
तस्मिन्सङ्क्रमते पापं कर्ता तत्र विमुच्यते ॥

इत्यादि । एतेन महदल्पपापभेदेन ज्ञानाऽज्ञानकृतभेदेन वा प्रकाशरहस्यभेदेन वा स्मार्तं पौराणं च प्रायश्चित्तं व्यवस्थापनीयमित्यपि न सम्यक् ।

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥

प्रायश्चित्तान्यशेषाणि तपःकर्माऽऽत्मकानि वै।
यानि तेषामशेषाणां कृष्णाऽनुस्मरणं परम्॥

इत्यादिना गुरुलघुसर्वपापानामविशेषेण कृष्णाऽनुस्मरणस्य मुख्यप्रायश्चित्तत्वाऽभिधानात्। नच

अथ पातकभीतस्त्वं सर्वभावेन भारत।
विमुक्ताऽन्यसमारम्भो नारायणपरो भव॥

इत्यादिविष्णुधर्मोत्तरवाक्यैर्भगवत्परायणस्यैव तदिति शङ्क्यम्। वस्तुमहिम्नः,

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः॥

इत्यादिवचनेन च सर्वस्यैव तदवगमात्। न चाऽस्त्वेवम्, परन्तु बहिर्मुखस्य म्रियमाणस्य भगवन्नामोच्चारणतः लघुपापनिवृत्तिर्भविष्यति। अन्यथाऽतिप्रसङ्गादिति वाच्यम्।

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने।
विघ्नो यत्र निवेशिताऽऽत्ममनसो ब्राह्मोऽपि लोकोऽल्पकः॥
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः।
किं चित्रं तदघं प्रयाति विलयं यत्राऽच्युते कीर्तिते॥

इत्यादिना कीर्तनतः सर्वस्य पापनिवृत्तिज्ञापनात्। 'सततं कीर्तयन्तो माम्' इति सततस्मरणकीर्तनाऽऽद्यभिधानन्तूत्तरपापनिवृत्त्याऽन्तकाले स्मृतिसंभवायेति मन्तव्यम्। अपि च म्रियमाणत्वाऽऽदीनां दुर्वचत्वेन नाऽधिकारिविशेषणत्वम्। तथा हि। म्रियमाणत्वं मरणक्षणसम्बन्धो वा, मरणाऽव्यवहितप्राक्कालसम्बन्धो वा, मरण-

पूर्वकालसम्बन्धो वा । नाऽऽद्यद्वितीयौ । तदानीं नामोच्चारणाऽसंभवात् । न तृतीयः । जीवतोऽपि नामोच्चारणं पापक्षयहेतु इति प्रसज्येत । तस्मान्नाऽजामिलवद् म्रियमाणत्वं नामोच्चारणस्य पापक्षयसाधनत्वेऽधिकारिविशेषणम् । एवम्—

अवशेनाऽपि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

इत्यादिवचनाऽनुरोधान्न श्रद्धादिसापेक्षत्वमपि । तथा च नाऽऽत्राऽर्थवादत्वं शङ्क्यम् ।

श्रुतिस्मृतिपुराणेषु नाममाहात्म्यवाचिषु ।
येऽर्थवाद इति ब्रूयुर्न तेषान्निरयक्षयः ॥

इत्यादिना तादृशशङ्कापङ्कमग्नानां महानिरयश्रवणादिति वदन्ति । तच्चिन्त्यम् । एतादृशनिरयवाक्यानां पूर्वोक्ताऽनुसारादविरुद्धाऽर्थे प्रामाण्याऽभावकथननिन्दापरत्वात् । अन्यथा—

पुराणेष्वर्थवादत्वं ये वदन्ति नराऽधमाः ।
तैरर्जितानि पुण्यानि तद्वदेव भवन्ति वै ॥
पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु ।
प्रवदन्त्यर्थवादत्वं ये ते नरकभाजनाः ॥

इत्यादिवचनात्पुराणवचनमात्रस्य सुतरां श्रुत्यक्षरस्य च यथाश्रुताऽर्थित्वं स्यादिति मीमांसावैयर्थ्याऽऽपत्तेः । तस्मादुक्तव्यवस्थैव ज्यायसीति मन्तव्यम् । मीमांसकास्तु सन्त्वेतानि पुराणवाक्यानि, परन्त्वर्थवादत्वादविवक्षितस्वाऽर्थानीति भजनीयदेवतास्तुतिमेवाऽऽश्रयन्ते । यस्याः सकृत्कीर्तनमप्येतादृक् सा पुनरा-

प्रायणमुपासिता किन्न करोनीति। एवं चानुष्ठेयाऽर्थपराणां मन्वाऽऽदिस्मृतीनामविरोधोऽप्युपपद्यत इति वदन्ति। तन्न सम्यक् । अर्थवादस्वरूपाऽपर्यालोचनात् । तथा हि । किमिदमर्थवादत्वमविधित्वं विधिशेषत्वं वा अतत्परत्वं वा । तत्राऽविधायकत्वरूपाऽविधित्वमपि किं लिङादिप्रत्ययविरहात् । तद्वाच्यविरहाद्वा । 'हरिरित्यवशेनाऽऽह पुमान्नाऽर्हति यातनाम्' इति वर्तमानोपदेशाद्वा। नाऽऽद्यः। "यदाग्नेयोऽष्टाकपाल" इत्यादीनामविधित्वप्रसङ्गात् । अत्र लिङादिप्रत्ययस्याऽसत्वात् । न द्वितीयः । असिद्धेः। "आग्नेयोऽष्टाकपाल" इत्यादौ लिङाद्यसत्वेऽपि अष्टाकपालपुरोडाशो द्रव्यमग्निर्देवतेति द्रव्यदेवतासम्बन्धेनेव प्रकृते 'प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम्' इत्यादौ साध्यसाधनसम्बन्धेन कालत्रयाऽवच्छिन्नेन पापक्षयकामो हरिस्मरणं कुर्यादिति विधेः कल्पनात् । लिङ्वाच्यस्य विधेः शब्दभावनायाः कार्यस्य वाऽसत्वात् । नापि तृतीयः। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "अग्निहोत्रं जुहोति" इत्यादीनामप्यविधायकत्वप्रसङ्गात् । अथ तत्र ब्रह्महत्यातरणाऽश्वमेधयोः साध्यसाधनभावस्य लोकाऽनधिगतत्वाद् यजते इत्यादौ पञ्चमलकाराऽऽश्रयणेन यजेतेत्यादिविधित्वं, तर्हि प्रकृतेऽपि हरिनामोच्चारणपापनिर्हरणयोः साध्यसाधनभावस्याऽपूर्वत्वाद्विधित्वं भविष्यति । एवं पराऽर्थत्वलक्षणं विधिशेषत्वमपि किन्नामकीर्तनविषयो यो विधिस्तच्छेषत्वं, उताऽन्यविधिशेषत्वम् । नान्त्यः । अन्यस्य विधेरसन्निधानात्, नामकीर्तनस्यैवाऽन्यविधिनिरपेक्षत्वेनोपसंहाराच्च। आद्ये तु नामकीर्तनविधेः फलाऽऽकाङ्क्षायामार्थवादिकमेव फलं पापक्षयरूपं

कल्प्यते। यथा "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति रात्रिसत्रविधेः फलाऽऽकाङ्क्षायां प्रतितिष्ठन्तीत्यर्थवादोपस्थितौ प्रतिष्ठाफलं कल्प्यते मीमांसाचतुर्थे। इत्थं च विधिशेषत्वेऽपि नामसंकीर्तनपराणां पौराणाऽर्थवादानां न काऽपि हानिरिति मन्तव्यम्।

ननु नाऽत्र विधिः कल्प्यते, किन्त्वव्यभिचरितोपासनासम्बन्धिदेवताद्वारान्यविहितक्रतुविधेरुपासनाविधेर्वाऽङ्गं नामसङ्कीर्तनं, नामसङ्कीर्तनप्रतिपादकतत्तद्वाक्यात्। यथा "यस्य पर्णमयी जुहूर्भवति" इति वाक्यात्पर्णमयीत्वमव्यभिचरितक्रतुसम्बन्धि जुहूद्वारा क्रत्वङ्गम्। तत्र च फलश्रवणमर्थवाद इति चेत्-अत्र वदन्ति। किं सर्वं नामकीर्तनवाक्यं पर्णतान्यायेन नामकीर्तनस्याङ्गत्वं बोधयेत्, कतिपयं वा। नाऽऽद्यः—

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥

इत्यादेरङ्गत्वबोधकत्वाऽनुपपत्तेः। ध्यानयज्ञाऽर्चनफले संकीर्तनस्य युगभेदेन व्यवस्थापरत्वात्। उभयपरत्वे वाक्यभेदप्रसङ्गात्। ननु "यथा यस्य पर्णमयी जुहूः" इति क्रत्वङ्गतया पर्णताविधानं "न स पापं श्लोकं शृणोति" इत्यर्थवादः तथा 'संकीर्त्य केशवम्' इत्युपासनाऽङ्गतया नामकीर्तनविधानं, इतरत् 'ध्यायन् कृते' इत्याद्यर्थवादः। ततश्च नाऽस्य व्यवस्थापरत्वं येन वाक्यभेदः स्यादिति चेत्—उच्यते। ध्यायन्यजन्नर्चयन् यदाप्नोतीत्येवंरूपः फलांशस्तावदास्तामर्थवादः। "न स पापं श्लोकं शृणोति" इतिवदर्थवादस्य सम्भावितत्वात्। 'कृते ध्यायन् त्रेतायां

यजन् द्वापरेऽर्चयन्' इत्येवं युगभेदेन श्रेयोहेतुत्वव्यवस्थाऽनुवादस्तु कथमर्थवादः स्यात् । स्तुतावनुपयोगात् । स्तुतिर्हि न देशकालव्यवस्थामालम्बते । 'अस्मिन्नेव ग्रामेऽयं समीचीनोऽस्मिन्नेव काले' इत्यादौ स्तुत्यपकर्षात् । अपि तु स्तुतिर्देशकालव्यवस्थाराहित्येऽपि स्तुत्यस्य पुरुषाऽर्थपर्यवसन्नत्वमालम्बते । तस्मादपूर्वत्वाद्व्यवस्थाविधिरेवाऽस्मिन्वाक्ये न पर्णतान्याय इति मन्तव्यम् । अत एव न कलिस्तुतिपरत्वमपि । कलिस्तुतेरनुपयोगात्, व्यवस्थायाश्चाऽपूर्वत्वात् । ननु कृते ध्यायन् यच्छ्रेय आप्नोति तत्त्रेतायां यजन्नाप्नोति, यत्त्रेतायां यजन्नाप्नोति, तद्द्वापरेऽर्चयन्नाप्नोति यद्द्वापरेऽर्चयन्नाप्नोति, तत्कलौ संकीर्त्य केशवमाप्नोतीतिपूर्वपूर्वयुगाऽपेक्षयोत्तरोत्तरयुगस्याऽल्पप्रयाससाध्यश्रेयोहेतुत्वप्रतिपादनेनोत्कर्षमुखेन सर्वयुगोत्कर्षः कलेर्विवक्षित इति चेन्नैवम् । वाक्यावृत्तिदोषप्रसङ्गात् । तस्मान्न स्तुतिपरमिदम् । अपि तु श्रेयोहेतुत्वव्यवस्थाविधिपरमिति । नाऽपि द्वितीयः । वाक्याऽन्तरेभ्यो नामसंकीर्तनस्योपासनाऽङ्गत्वेऽपि व्यवस्थावाक्यात्पुरुषाऽर्थत्वस्याऽपि संभवात् । एवं

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियाऽऽदिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

इत्यादिना क्रत्वङ्गत्वेऽपि नामकीर्तनस्य तद्बोध्यम् । अपि च संकीर्तनं द्विविधम् । गुणकीर्तनं नामकीर्तनं च । तत्र नामकीर्तनस्य क्रत्वङ्गत्वेऽपि गुणकीर्तनस्य तदभावात्फलाऽऽकाङ्क्षायामार्थवादिकं फलं संबध्यत एव । नामकीर्तनस्याऽपि सत्यप्युक्तवाक्यात्क्रत्वङ्गत्वे

सर्वाऽर्थशक्तियुतस्य देवदेवस्य चक्रिणः ।

यद्वाऽभिरोचते नाम तत्सर्वाऽर्थेषु योजयेत् ॥

इतिवाक्येन पुरुषाऽर्थताऽस्त्येव। यथा खादिरतायाः "खादिरो यूपो भवति" इति क्रत्वङ्गत्वेऽपि "खादिरं वीर्यकामस्य" इति (आदि) वाक्येभ्यः पुरुषाऽर्थनाऽपि । ततश्च 'कलौ संकीर्त्य केशवम्' इत्यत्र संकीर्तनत्वेनोभयोः फलाऽऽकाङ्क्षायां यदाप्नोति तदाप्नोतीति फलाऽन्वयो घटत एव। इत्थं च सर्वेषामेव नामकीर्तनाऽऽदिपराणां वाक्यानां फलपरत्वमेव ज्ञेयम्। एवमतत्परत्वमपि प्रतीयमानाऽर्थतात्पर्यराहित्यरूपं न, बाधकसत्वात्, नाऽपि साधकाऽभावात्, अर्थाऽन्तरपरत्वरूपस्य बाधकस्य निरासात्। अर्थाऽन्तरपरत्वे निराकृते स्वाध्यायाऽध्ययनविधेरेव साधकस्य सत्वाच्च । अपि च स्पष्टमुपलभ्यन्त एव कीर्तनविषया विधयः—

तस्मादेकेन मनसा भगवान्सात्वतां पतिः।
श्रोतव्यः कीर्नितव्यश्च ध्येयः पूज्यश्च सर्वदा ॥
गोविन्देति सदा वाच्यम्
नामानि तद्रतिकराणि पठेदलज्जः।

इत्येवं जातीयका बहवः । तत्र चाऽऽर्थवादिकमुक्तफलमेवेति न काऽप्यनुपपत्तिः। तस्मादर्थवादत्ववर्णनं नरकायैव केषाञ्चिदिति मन्तव्यम्। तदुक्तम्—

अहो हि वाक्ये चतुरक्षरे द्वे
पुण्यस्य पापस्य निदानभूते ।
उच्चारणादेव नृणां मुनीन्द्रा
नारायणश्चेति नचार्थवादः ॥

इत्यादि । अथ महाफलं कथमल्पेन लभ्येतेति चेत् । वचनबलादेवेत्यवेहि । दृश्यते हि "सत्रायावगूर्य विश्वजिता यजेत" इति सत्रफलोद्देशेन विश्वजिद्विधानम् । एवं ज्योतिष्टोमफलोद्देशेन सर्वेभ्यः कामेभ्यो दर्शपूर्णमासविधानम् । ततश्च तुल्यं फलम् । कस्तर्हि महत्सु कर्मसु प्रवर्तेतेति चेत्—श्रूयताम् । तच्चिकीर्षुरेव तत्र प्रवर्तताम् । दृश्यते हि कस्मैचिन्महदेव रोचते कस्मैचिदल्पमेवेति शक्त्यशक्त्यपेक्षया व्यवस्था कल्प्यतामिति प्रागेवोक्तप्रायम् ॥ २० ॥

ननु भक्तिः सुगमोपायः अज्ञानं स्वभक्तिबीजं परमेश्वरविषयमनादिकालप्राप्तमतिदृढं कथमतिसुकरेण भक्तियोगेन नाशनीयमत आह—

लघ्वपि भक्त्यधिकारे महत्क्षेपक-
मपरसर्वहानात् ॥ २१ ॥

लघ्वपीति । सुकरमपि भक्त्याख्यं साधनं महत्क्षेपकम्—महतो दृढभूमेरज्ञानस्य, क्षेपकं—नाशकम् । कुतः भक्त्यधिकारेऽपरसर्वहानात् भक्तस्य शरणापन्नस्याधिकारे ज्ञानवैराग्यादीनामपरेषां सर्वेषां

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । (भ० गी० १८-६६)

ज्ञाने प्रयासमुदपास्य मनन्त एव ।
जीवन्ति सन्मुखरितां भवदीयवार्ताम् ॥
स्थानस्थिताः श्रुतिगतां तनुवाङ्मनोभिः ।
ये प्रायशोऽजित जितोऽप्यसितैस्त्रिलोक्याम् ॥

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा॥(भा.स्कं.-११-२०-३१-३२)

इत्यादिना त्यागकथनादिति वदन्ति । तच्चिन्त्यम् ।

ज्ञानं प्लावयते नित्यं यो ज्ञानमनुवर्तते ।
ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥
'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि' (भ० गी०–४–३६)

इत्यादिवचनविरोधात् । तस्मान्नोक्ताभिप्रायः । किन्तु लघ्वपीषत्कीर्तनाऽऽदि महतः पापस्य क्षेपकं नाशकम् । अपरस्य सर्वस्य कर्मणो हानाद् हानमभ्युपेत्य भक्तस्य शरणापन्नस्याऽधिकारे द्वादशाऽब्दादीनामभक्ताधिकारिकत्वमिति भावः । श्रीभागवते—

कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ (स्क०–६–१–११)

इत्यनेन कर्मात्मकप्रायश्चित्तस्य भक्ताधिकारित्वमुक्त्वा

केचित्केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥(स्क०-६-१-१५)

इत्यादिना शरणापन्नस्य भक्तेः प्रायश्चित्तत्वेनाऽवतारितत्वात् । तथा गीतायाम्—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । (अ०–९–३४)

इतिश्लोके प्रशस्ततमनिष्कामकर्मोक्तेः । ततोऽपि रहस्यपरे

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥(अ०–१८–६६)

इतिवाक्ये

नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।

इतिपद्योक्तनिष्कामकर्मत्यागविशिष्टपरमेश्वरशरणापत्तिरूपभक्तिकथनं पूर्वार्धेनोत्तरार्धस्य तादृशाधिकारिणः सकृत्कीर्तनस्मरणाद्युत्पादनेन सर्वपापक्षयं जनयिष्यामीति तात्पर्यं भगवत इति वदन्ति । एतदपि चिन्त्यम् । गीतावाक्यस्य ज्ञानजननेन सर्वपापं नाशयिष्यामीत्यत्रैव तात्पर्यात्पूर्वापरपर्यालोचनतस्तथैवावगमात् । तस्मादयमर्थः सूत्रस्य । लघ्वपि कीर्तनादिकं महद्भवति । यतः शरणाऽऽपन्नस्य सर्वहानात् । ऋणित्वाद्यभावं प्राप्य क्षेपकं समस्तपापनाशकं भवतीति । तथा च स्वरूपलाघवेऽपि फलद्वारके महत्त्वमस्त्येवेति भावः । भगवच्छरणस्यानृणित्वमुक्तं श्रीभागवते—

देवर्षिभूतात्मनृणां पितृणाम् ।
न किङ्करो नायमृणी च राजन् ॥
सर्वात्मना यः शरणं शरण्यम् ।
गतो मुकुन्दं परिहृत्य कृत्यम् ॥ इति ॥ २१ ॥

श्रवणकीर्तनादेः पापनिवर्तकत्वात् 'प्रायश्चित्तन्तु तस्यैकं' ( विष्णु० अ०–२–६–३४ ) इत्यादिना प्रायश्चित्तरूपत्वोक्तावपि प्रायश्चित्तान्तरधर्मास्तु नायान्तीत्यत आह—

## तत्स्थानत्वादनन्यधर्मः खलेवालीवत् ॥ २२ ॥

तत्स्थानत्वादिति । श्रवणकीर्तनाऽऽदिकमनन्यधर्म एव

प्रायश्चित्ताऽन्तरविहितधर्मरहितमेव । कुतः तत्स्थानत्वात्-प्रायश्चित्तस्थानत्वात्-प्रायश्चित्तस्थाने तद्विधानादिति यावत् । तत्र दृष्टान्तः, खलेवालीवत् । यथा 'खलेवाली यूपो भवति' इत्यत्र पशुयोजने यूपकार्ये खलेवाली विधिरिति न यूपधर्मास्वीकरणादिप्रसङ्गः । तद्वदत्र नखलोमादिवपनानां प्रायश्चित्तधर्माणामप्राप्तिरिति । ननु किं विनिगमकम्, 'प्रायश्चित्तन्तुतस्यैकम्' ( वि० अं० २-६-३४ ) इत्यादौ प्रायश्चित्तधर्मप्राप्तये । न तत्संज्ञाविधिः । किन्तु हरिस्मरणादेः प्रायश्चित्तकार्ये विधिरिति चेत्-पापक्षयरूपफलसंयोगलाभस्यैव विनिगमकत्वात् । संज्ञाविधौ तु तन्न स्यात् । न च कीर्तनादेरपि पापक्षयहेतुत्वात्प्रायश्चित्तत्वमेवेति वाच्यम् ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥ ( अङ्गिरस्स्मृ० )

इत्यनेन तपसि प्रायश्चित्तशब्दो मुख्योऽन्यत्र गौण इति मन्तव्यम् ।

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ ( विष्णु पु० )

इत्यत्र षष्ठी तु पञ्चम्यर्थे बोध्या ॥ २२ ॥

स्यादेतत् । परन्तु भक्तावधिकारी कः प्राणी किं कर्मणीव स्वाध्यायाध्ययनादिसम्पन्नो द्विज एव उत ब्रह्मविद्यायामिव साधनचतुष्टयसंपन्न एवोत्तमस्तत्राह—

**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत् ॥ २३ ॥**

आनिन्द्येति । निन्दितचाण्डालादियोनिपर्यन्तो जन्तुः सर्वोऽपि भक्तावधिक्रियते 'अपि वा चाण्डालः शिव इति वाचं वदेत् तेन सह संवसेत्' ।

अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाऽग्रे वर्तते नाम तुभ्यम् ॥
यन्नामधेयश्रवणानुकीर्तनात् ।
यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते ॥ (भा०३-३३-६)
किरातहूणान्ध्रपुलिन्दपुल्कसा ।
आभीरकङ्का यवनाः खशादयः ॥
येऽन्ये च पापा यदपाश्रयाश्रयाः ।
शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः ।
यत्र तत्रानुकुर्वन्तो विष्णोर्नामानुकीर्तनम् ॥
सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम् ।
चण्डालादयोऽपि श्रेष्ठाः स्युर्विष्णुभक्तिपरायणाः ॥
तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा ।
स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः ॥
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ।
सर्वेषामप्यघवनामिदमेव सुनिष्कृतम् ॥
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥

इत्यादिश्रुतिस्मृतिवाक्येषु सर्वाधिकारलाभात् । ननु चण्डाला-

दीनां वेदाऽध्ययनाभावात्कथं तदर्थज्ञानं विना भक्तिसिद्धिरत आह—पारम्पर्यादिति । उपदेशपारम्पर्यसंभवादित्यर्थः । तथा च तेषामपि स्यात् ।

न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमुत्थितः ।
तस्माद्वेदः परो मन्त्रो वेदाङ्गश्चागमः स्मृतः ॥
वेदेन साध्यते सर्वं ग्रहयज्ञादिभिः किल ।
न वेदेन विना यज्ञा न वेदा यज्ञवर्जिताः ॥
तस्माद्वेदः परो मन्त्रो न मन्त्रो वेद उद्गतः ।
न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः ॥

'मन्त्राभावादमन्त्रेण भाषितं सर्वकर्म हि' इति कापिलपञ्चरात्रोक्तेः,

यावद्वर्णानि मन्त्राणां शूद्राय प्रतिपादयेत् ।
तावत्यो ब्रह्महत्याः स्युः स्वयमाह प्रजापतिः ॥

इति शातातपोक्तेश्च । शूद्रेभ्यो मन्त्रदाननिषेधेन दीक्षानधिकारतुल्यन्यायेन हीनानां सर्वेषां भक्तावनधिकारज्ञापनाच्चेत्यवेदमूलकज्ञानसंभवात् । दीक्षानिषेधवचनानां

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये शुद्धयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु संकीर्णधर्मिणाम् ॥

—इतिभविष्योत्तरवचनानुसारादसच्छूद्रादिनिषेधपरत्वात् ।

स्वाहाप्रणवसंयुक्तं मन्त्रं शूद्रे ददद् द्विजः ।
शूद्रो निरयगामी स्याद्विप्रः शूद्रत्वमाप्नुयात् ॥

इति पद्मपुराणादिवाक्यानुसारान्मन्त्रविशेषप्रदानानधिकारपरत्वात् ।

( न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन ।
नमोन्तं शिवमन्त्रं वा वैष्णवं नेष्यते बुधैः ॥
स्त्रीशूद्राणामयं मन्त्रो नमोऽन्तश्च शुभावहः ।
एतज्ज्ञाता महासेन चण्डालानपि दीक्षयेत् ॥

इति याज्ञवल्क्ययामलादिवचनैर्नमोऽन्तादिष्वधिकारात् तत्तुल्य-न्यायेन सर्वत्र भक्तावधिकारोऽस्त्येव सामान्यवत् ।

यथा—

क्षमा सत्यं दया शौचं दानमिन्द्रियनिग्रहः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं सदा ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनसूया तथा धर्मः सामान्यः परिकीर्तितः ॥

इति मन्वाद्युक्तसामान्यधर्मे सर्वस्याधिकारस्तद्वदितिभावः ।

केचित्तु मोक्षधर्मे शुकस्य व्यासाश्रमप्राप्तौ वेदं प्रकृत्य—
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु । इत्युक्त्वा—
श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ।
वेदस्याध्ययनं हीदं तत्वार्थसहितं स्मृतम् ॥

इति ब्राह्मणाग्रकरणेन सर्वस्यापि सार्थवेदश्रवणेऽधिकारकथनात् ।

वस्तुतो ब्राह्मणत्वाऽदिजातेर्दुर्वचत्वाद्दुर्ज्ञेयत्वाच्च न सा तत्राधिकारिविशेषणम् । किन्तु सत्यादिगुणवत्वलक्षणमेव ब्राह्मण-

त्वम्। वनपर्वणि सर्पयुधिष्ठिरसंवादेन तथावगमात्। तथाहि अगस्त्यशापान्नहुषो राजा सर्पयोनिं प्राप्तो युधिष्ठिरमुखाद्ब्रह्मविद्याधिकारिणं ब्राह्मणं निर्णेतुं युधिष्ठिरमुवाच—

ब्राह्मणः को भवेद्राजन् वेद्यं किं च युधिष्ठिर।
ब्रवीह्यातिमतिं त्वां हि वाक्यैरनुमिमीमहे।) *

* अत्र खण्डितभक्तिचन्द्रिकांशोऽधुना पुस्तकबन्धनात् ( जिल्द ) प्राग् दैववशादुपलब्धः। पृष्ठाङ्कं पूर्वानुवृत्तमेव पुनर्निवेश्य ( ) एतच्चिह्नमध्ये स्थापित इति।

तमाह युधिष्ठिरः—

सत्यं दानं क्षमा शीलमार्जवञ्च तपो घृणा ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥ इति ।

सर्पः—

चातुर्वर्ण्ये प्रमाणं च सत्यं च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ॥ इति ।

युधिष्ठिरः—

शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमितिनिर्दिशेत् ॥

जातिवैयर्थ्यमाशङ्कते सर्पः—

यदि वै वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तथायुष्मन्कृती यावन्न विद्यते ॥ इति ।

दुर्ज्ञेयत्वाद्दुर्वचत्वाज्जातिर्व्यर्थैवेत्याह—

युधिष्ठिरः—

जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥
इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्वदर्शिनः ॥

प्राङ् नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संस्कारस्त्वत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम ॥ इति ।

तादृशमेव ब्राह्मणत्वं "ब्राह्मणो निर्वेदमायात्" इत्यत्राभिप्रेतम्, न जातिरूपम् । अत एव शौनकादिभिर्महर्षिभिः प्रतिलोमोऽपि सूतो धर्मान् श्रोतुं पौराणिकः कृत इति प्राहुः । तन्न युक्तम् । 'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणम्, अध्ययने जिह्वाच्छेदः, अर्थावधारणे हृदयविदारणम् ।

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥

इत्यादिस्मृत्या शूद्रोपलक्षितनीचजातेर्ब्राह्मणाग्रकरणेनापि वेदवेदान्ताध्ययनपूर्वकार्थग्रहणेऽधिकारवर्जनात् । वेदान्तसूत्रेष्वपि शूद्राधिकरणेनापि तथैव प्रतिपादनात् । तस्माज्जातिर्नाधिकारिविशेषणम्, किन्तु गुणवत्त्वमेवेति रिक्तं वचनम् । नीचादपि गुणोत्पन्नस्य संस्कारालब्धजातिकस्य गुणवत्त्वमात्रेण विद्यायामधिकारो भवतीत्यर्थे दर्शितवाक्यानां तात्पर्यात् । महाभारते मतङ्गोपाख्यानादेस्तथावधारणात् । तत्र नीचाद्ब्राह्मण्यामुत्पन्नस्य मतङ्गस्याप्रा-

कट्ये ब्राह्मणस्य प्राकट्ये च ब्राह्मण्यहानेः श्रवणादित्यास्तां विस्तरः । तस्माच्छूद्रादिना नीचेन पुराणश्रवणभाषाप्रबन्धाध्ययनत एव ज्ञानमुत्पाद्य भक्तिः संपादनीयेति सिद्धम् ।

स्यादेतत् कथं संकीर्तनलक्षणायां भक्तौ तु द्विजोऽधिक्रियते ।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं कृपया मुनिना कृतम् ॥(भाग० १-४-२५)

इति स्त्रीशूद्रादीनामर्थे भारतनिर्माणात्, भारतशब्दस्य च पुराणमात्रोपलक्षणत्वात्, संकीर्तनस्य च पौराणत्वात्स्त्रीशूद्रमात्राधिकारत्वनिर्णयात् । न हि केशवसंकीर्तनं कुर्यादिति क्वचिद्वेदे श्रूयते । ननु "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि"इति श्रुतेः ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥(याज्ञ.स्मृ.१-३)

इति स्मृतेश्च वेदानामिव पुराणेतिहासाऽऽदीनामपि व्यासतः प्रकटानां नित्यसिद्धत्वाद्वेदार्थे स्वतःप्रमाणत्वाच्च कथन्तदर्थस्य स्त्रीशूद्रमात्राधिकारत्वं, न द्विजाधिकारत्वमिति चेत् । न । कथंचित्समप्रमाणत्वेऽपि श्येनादिवाक्यानां सकामपरतावत्पुराणवचसां 'स्त्रीशूद्रद्विजबन्धूनाम्'इत्यादिवाक्यतः स्त्रीशूद्रादिपरत्वेन तथा कल्पनात् । किं च क्षत्रियादीनामध्यापनादिव्यापाराभावात् स्यात्कथंचित्संकीर्तनाधिकारः । ब्राह्मणानान्त्वध्यापनादिव्यापृतानां न कथंचित्संकीर्तनकालो लभ्यत इति ब्राह्मणेतराधिकारं भजनम् । नित्यकर्मव्यापृतानां

संकीर्तने कालाऽभावात् । किं च ।

ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥

इत्यनधीतस्य नामसंकीर्तनेनाधीतसंपत्तिश्रवणादनधीतशूद्राधिकारत्वं निर्णीयत इति चेत् । अत्र वदन्ति । एवं हि ज्योतिष्टोमाऽऽद्यनुष्ठानं काम्यकर्माऽनुष्ठानं च न स्यात् । ब्राह्ममुहूर्तमारभ्य नित्यकर्माऽवरुद्धत्वात्कालस्य । यदि च कथंचित्सोढ्वा ज्योतिष्टोमाऽऽद्यनुष्ठानं तुल्यमिदं संकीर्तनेऽपि, तस्याऽपि विहितत्वात् । यच्चोक्तं "ऋग्वेद" इत्यादिवाक्याच्छूद्राऽधिकारत्वमिति । तच्चानिष्टम् । सर्वाऽधिकारत्वात् । न चैतदेकान्तिकं शूद्राऽधिकारत्वसूचकं लिङ्गम् । तथाहि । येनोक्तं हरिरित्यक्षरद्वयं तेनाऽधीता इति प्रत्यक्षबाधितम् । अथ प्रशंसा क्रियते । ब्राह्मणस्यापि सा संभवतीति नासाधारणं शूद्रलिङ्गम् । अधीतवतापि येन ब्राह्मणेन हरिरित्युक्तं तेनाधीता इति । यच्चोक्तम् 'स्त्रीशूद्रद्विजबन्धूनाम्' इत्यादिवाक्यावष्टम्भेन संकीर्तनस्य शूद्राधिकारत्वम् । तत्रोच्यते । सत्यं स्त्रीशूद्राऽऽदीनामर्थे भारताऽऽदिनिर्माणं, न तु तन्मात्राऽर्थे, तत्र ब्राह्मणाऽदीनामपि धर्मनिरूपणात् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति ब्राह्मणादिकर्तृवेदार्थनिर्णायकत्वेनोपादानाच्च । वस्तुतस्तु वेदानामिव पुराणानामपि नित्यसिद्धत्वात्स्वाध्यायाध्ययनविधिपरिगृहीतमध्ययनं दृष्टार्थम्, त्रैवर्णिकानां तदर्थेषु ज्ञानयज्ञादिष्विव कीर्तनेऽप्यधिकारमाक्षिपति, श्रवणद्वारा च तुरीयादेरिति न कोऽपि दोषः । यच्चोक्तं संकीर्तनं न वैदिकमिति, तदपि न युक्तम् । "तमु स्तोतार"

इत्यादिश्रुतिबोधितत्वात् । तस्मात्-संकीर्तनस्य पौराणत्वात्स्त्रीशूद्राधिकारत्वमेव इति, रिक्तं वचः । यदप्युक्तं ब्राह्मणानामध्यापनादिव्यापृतत्वेन संकीर्तनकालाभावादब्राह्मणाधिकारं संकीर्तनमिति भाव इति, तदपि न युक्तम् । अध्यापनादेरावश्यकत्वाभावात् ।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।

याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः । (म.स्मृ.१०-७६)

इति वृत्त्यर्थत्वेन विध्यभावाच्च ज्योतिष्टोमाद्यननुष्ठानप्रसङ्गाच्च । वस्तुतस्तु 'श्रावयेच्चतुरो वर्णान्' इत्यस्य "एतया निषादस्थपतिं याजयेत्"इतिवत्प्रयोज्यव्यापारपरत्वेन श्रवणविधिपरत्वात्तस्य चाऽध्यापनविधिवद् दृष्टार्थत्वात् पुराणार्थज्ञानकामाश्चत्वारो वर्णाः पुराणानि शृणुयुरित्यर्थोऽवसीयते। ततश्चोत्तरत्र क्रतुष्वध्ययनविधिसिद्धार्थज्ञानवतामिव पौराणेषु कर्मसु श्रवणविधिसिद्धार्थज्ञानवतां चतुर्णां वर्णानामधिकारो निश्चीयते ।

'श्वादः शुद्ध्येरन् यस्य कीर्तनात्' इत्यादिवचनात्तु चाण्डालादीनामप्यधिकारः । तेषां हि पुराणश्रवणाऽभावेन शूद्रस्येवाध्ययनाभावेन वैदिकेषु कर्मसु पौराणिकेषु संकीर्तनादिषु न्यायेनाधिकाराभावेऽपि "एतया निषादस्थपतिं याजयेत्"इति निषादेष्टाविव निषादस्योक्तवचनादधिकारो निर्णीयते । तस्मात् सिद्धं गुणनामकीर्तनं सर्वाधिकारमिति ।

लिङ्गपुराणे—ऋषय ऊचुः—

कृष्णस्तुष्यति केनेह सर्वदेवेश्वरेश्वरः ।
वक्तुमर्हसि चाऽस्माकं सूत सर्वार्थविद्भवान् ॥

सूत उवाच—

पुरा पृष्टो महातेजा मार्कण्डेयो महामुनिः ।
अम्बरीषेण विप्रेन्द्रास्तद्वदामि यथातथम् ॥

इत्यम्बरीषमार्कण्डेयसंवादं प्रक्रम्य

पुरा त्रेतायुगे कश्चित्कौशिको नाम वै द्विजः ।
वासुदेवपरो नित्यं सामगानरतः सदा ॥
भोजनासनशय्यासु सदा तद्गतमानसः ।
उदारचरितं विष्णोर्गायमानः पुनः पुनः ॥
विष्णुस्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ।
अगायत हरिं तत्र लयतालसमन्वितम् ॥

इत्यादिना भगवद्गुणगायकस्य कौशिकस्य तदन्नदातुश्च पद्माक्षस्य नित्यं तद्गानं शृण्वतः तच्छिष्याणां च राजन्यवैश्यविप्राणां गानविद्याधिकारिणां वासुदेवपरायणानां गालवनामकस्य वैश्यस्य च विष्णुपरायणस्य सभार्यस्य तद्गानं शृण्वतोऽन्येषां च ब्राह्मणानां शृण्वतां स्वगुणगानार्थं कलिङ्गराजेन कृतेऽपि निग्रहे विष्णुगुणव्यतिरिक्तगाननिवृत्तानामेतेषां सर्वेषां कालगतिं गतानां—

वेष्टितः स्वगणै राजन् ब्रह्मा प्राह च तान्सुतान् ।
कौशिकादीन्द्विजानद्य वासुदेवपरायणान् ॥
गानयोगेन ये नित्यं पूजयन्ति जनार्दनम् ।
तानानयत भद्रं वो यदि देवत्वमिच्छथ ॥

इत्यादिना विष्णुलोकनयनं भगवदनुग्रहश्च श्रूयते ।

ततोऽवलोक्य भगवान्हरिर्नारायणः प्रभुः ।

कौशिकेत्याह संप्रीत्या तांश्च सर्वान्यथाक्रमम् ॥
जयघोषो महानासीन्महाश्चर्ये समागते ।
ब्रह्माणमाह विश्वाऽऽत्मा शृणु ब्रह्मन्यथोचितम् ॥
कौशिकस्य तु ये विप्राः साध्यसाधनतत्पराः ।
हिताय संप्रवृत्ता ये कुशस्थलनिवासिनः ॥
मत्कीर्तिश्रवणे युक्ता गानतत्वार्थकोविदाः ।
अनन्यदेवताभक्ताः साध्या देवा भवन्त्विमे ॥
मत्समीपे तथाऽन्यत्र प्रवेशं देहि सर्वदा ।
एवमुक्त्वा पुनर्देवः कौशिकं प्राह माधवः ॥
स्वशिष्यैस्त्वं महाप्राज्ञ संसक्तो मम वै सदा ।
गणाधिपत्यमापन्नो यत्राहं त्वं समास्स्व वै ॥
गालवं मालतीश्चैव प्राह दामोदरो हरिः ।
मम लोके यथाकामं भार्यया सह गालव ॥
दिव्यरूपधरः श्रीमाशृण्वन्गानमिहाधिपैः ।
आस्स्व नित्यं यथाकामं यावल्लोका भवन्ति वै ॥
पद्माक्षमाह भगवान् धनदो भव मानद ।
धनानामीश्वरो भूत्वा यथाकालं हि मां पुनः ॥
आगम्य दृष्ट्वा नत्वा च कुरुष्व च यथासुखम् । इत्यादि ।

अम्बरीषं प्रति—

तस्मात्त्वया महाराज विष्णुक्षेत्रे विशेषतः ।
अर्चाग्रे गाननृत्यादि वाद्योत्सवसमन्वितम् ॥
कर्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशन्नृप ।

श्रोतव्यं च त्वया नित्यं स्तोतव्योऽसौ हरिस्त्वया ॥ इति ।

विष्णुस्तोत्रन्ततो विद्वान् कारयेद्भक्तिसंयुतः ।
गाननृत्यादिकं चैव विष्ण्वाख्यानकथां तथा ॥
जातिस्मृतिं च मेधां च तथैव परमोन्नतिम् ।
प्राप्नोति विष्णुसालोक्यं सत्यमेतन्नराधिप ॥

इति । ततोऽग्रिमाऽध्याये कौशिकादीनां गानयोगेन भगवदनुग्रहमवलोक्याऽनुतप्तो नारदस्तपस्तप्त्वाऽऽकाशवाचा नियुक्तो गानबन्धुमुलूकेन्द्रं प्रति गत उलूकेन्द्रमाह 'शृणु सर्वं यथातथम्'इत्युपक्रम्य—

यद्दत्तं यद्धुतं चैव यद्वाचा श्रुतमेव च ।
यदधीतं मया सर्वं कलां नाऽर्हति षोडशीम् ॥
विष्णोर्माहात्म्ययुक्तस्य गानयोगस्य वै ततः ।

इत्यादिना गानयोगविषये तं प्रार्थितवान् । गानबन्धुरपि भुवनेशं नाम राजानं प्रकृत्य—

तस्य राज्ञः पुराऽभ्याशे हरिमित्र इति स्मृतः ।
ब्राह्मणो विष्णुभक्तश्च सर्वद्वन्द्वविवर्जितः ॥
नदीपुलिनमासाद्य प्रतिमां स हरेः शुभाम् ।
अभ्यर्च्य च यथाशास्त्रं घृतदध्युत्तरं बहु ॥
मिष्टान्नं पायसं दत्वा हरेरावेद्य पूर्वकम् ।
प्रणिपत्ययथान्यायं तत्र विन्यस्तमानसः ॥
अगायत हरिं साक्षात्तालवर्णलयान्वितम् ॥

इत्यादिना भगवद्गुणगायकं हरिमित्रं प्रशस्य तत्प्रतिबन्धकर्तुश्च

राज्ञो यमयातनां निरूपितवान् । न चैतदब्राह्मणविषयम् ।

ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं नृप ।
हरेः सालोक्यमाप्नोति रुद्रज्ञानाधिको भवेत् ॥
अन्यथा नरकं गच्छेद्गायमानोऽन्यदेव हि ।

इति तत्रैव । याज्ञवल्क्ये च—

गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्याऽनुचरो भूत्वा सह तेनैव मोदते ॥
तालज्ञश्चाऽप्रयासेन मोक्षमार्गं स गच्छति ॥(या.स्मृ.३-११६)

इत्यादिनो ब्राह्मणाऽऽदिसाधारणसर्वजनकर्तव्यताप्रतिपादनात् । तत्सिद्धं ब्राह्मणेनाऽपि विष्णोर्गुणगानं कर्तव्यमिति, श्रोतव्यं च तदिति । तच्छ्रोतॄणां पद्माक्षप्रभृतीनामुत्तमगतिश्रवणात्, भगवति चित्ताऽनुरागहेतुत्वाच्च ।

स्यादेतत् । परन्तु साधुशब्देनैव तच्छ्रोतव्यं कर्तव्यं च न भाषाप्रबन्धाऽऽदिना श्रोतव्यं कर्तव्यं वा "न म्लेच्छितवै नाऽपभाषितवै म्लेच्छो ह्या एष यदपशब्दः" इतिनिषिद्धत्वादितिचेत् । असाध्वेतत् । तस्य विहितत्वेन निषेधाप्रवृत्तेः । न च भगवद्गुणनामकीर्तनकर्तव्यताविधेरुक्तनिषेधानुरोधेन सङ्कोचो युक्तः, साधुशब्देनैव भगवद्गुणनामकीर्तनं कर्तव्यमितिवाच्यम् । निषेधस्य रागप्राप्तविषयत्वेनाप्युपपत्तेः । नचैवं साक्षाच्छ्रूयते साधुशब्देनैव भगवद्गुणनामकीर्तनं कर्तव्यमिति । अपि च निषेधो हि प्राप्तिमपेक्षते । प्राप्तिश्च रागतो विधितो वा । तत्र प्राकृतवाक्यै-

भगवद्गुणानुवादो न रागतः प्राप्तः, भोजनवद्दृष्टफलत्वाऽभावात् । विधितः प्राप्तत्वेन सिद्धं समीहितम्, तत्र निषेधाऽप्रवृत्तेः विहितनिषिद्धत्वे विकल्पाऽऽपत्तेः । षोडशिग्रहणवत्पक्षे विहितत्वसिद्धेः । न च यथाकथंचिद्भगवद्गुणानुवादो लोकपूज्यताहेतुरिति रागतः प्राप्तमिति वाच्यम् । तथा सति संस्कृतवाक्यैरपि भगवद्गुणानुवादस्याविहितत्वापत्तेः, अग्निहोत्राद्यनुष्ठानस्याऽपि तथात्वाच्च । तस्माद्भगवद्गुणानुवादकर्तव्यताविधौ सामर्थ्यात्करणत्वेन जिह्वेवाधिकारित्वेन मनुष्यमात्रमिव सामर्थ्यात्संस्कृतप्राकृतसाधारणवाक्यमन्वेतीत्यवश्यमभ्युपेयम् । ततः सिद्धं भाषयाऽपि गुणनामकीर्तनं कर्तव्यमिति ।

तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ।(भाग०७।१३१)
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।

इत्यादिनाऽपि तथा बोधनादिति दिक् । स्तवो-गुणकीर्तनानि । स्तोत्रैरिति ग्रन्थनामधेयन्तेषामुच्चावचत्वं दर्शयति-पौराणैः प्राकृतैरिति । एवं नीचकर्तृकभगवद्गुणगानादिश्रवणेऽपि दोषाऽभावः । "अपि वाऽयं चाण्डालः शिव इति वाचं वदेत्तेन सह संवसेत्तेन सह भुञ्जीत" 'यद् द्व्यक्षरं नाम गिरेरितं नृणाम्'इत्यादिश्रुतिपुराणवचनेभ्यः सकृद्नामसङ्कीर्तनेऽपि दुरितनिकरभञ्जनतो नीचानामपि व्यवहार्यत्वोक्त्या तदवगमादिति ।

ननु तथाऽपि कथं कीर्तनं सर्वाधिकारम् । मुमुक्षूणान्तत्रा-

धिकाराभावात् । तेषां—

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।

नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ (भ०गी० ३-१८)

इत्यादिना कर्मकरणसाध्यफलाऽऽद्यभावश्रवणादिति चेत् । सत्यम् । यद्यपि तेषां सकलपापक्षयस्य ज्ञानेनैव वृत्तत्वान्न तदुद्देशेन प्रवृत्तिः नाऽपि फलाऽन्तरोद्देशेन, निष्कामत्वात् । तथाऽपि भोजनादाविव चित्तविश्रान्तिरूपदृष्टसुखार्थं तेषान्तत्र प्रवृत्तिः । शुकादीनान्तथा श्रवणात् । सङ्कीर्तनं कुर्वतां सद्यश्चित्तविश्रान्तेरनुभवाच्च ।

ननु यदि कीर्तनं दृष्टार्थं तर्हि भोजनादिवद्विध्यभावप्रसङ्ग इतिचेत्, उच्यते । सङ्कीर्तनं यद्यप्यदृष्टार्थम् । सर्वत्र बहुभिर्वाक्यैः फलार्थत्वेन विधानात् । तथाप्यवघातादिवद् दृष्टार्थमपि भवति । न च तावता विध्यभावः । तथा सत्यवहननादावपि विधिर्न स्यात् । तस्मात्सुखातिशयार्थमेव तेषां भगवत्कीर्तनमिति सिद्धं कीर्तनं सर्वाधिकारमिति ।

स्यादेतत् । तथापि विदुषां बहिर्व्यापारसाध्यं कीर्तनं कथं घटते "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ० २-४-१४) इत्यादिश्रुत्या विद्यावतां सर्वद्वैतबाधबोधनादितिचेत् । अभिप्रायमनवगतवानसि । यतो ब्रह्मलोकं गतस्य विदुषो विविधैश्वर्यसंभावकस्य स्वभवनस्य युगपदनेकमनस्तत्सम्बन्धाद्यसम्भवैरनुपपत्तिमाशङ्क्य "प्रदीपवदावेशस्तथाहि दर्शयति" (ब्र०सू० ४-४-१५) इति सूत्रेण तत्संभवं समर्थ्य तस्याप्यसंभवं वदन्त्यास्तादृशश्रुतेः स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं तथा हीति वदता भगवता व्यासेन सुषुप्तिमुक्त्यन्यतरपरत्ववर्णनात् ।

युक्तश्चैतत् । अन्यथा याज्ञवल्क्यप्रभृतीनामाचार्यत्वं श्रूयमाणमनुपपन्नं स्यात् । द्वैतदृष्टत्वे तत्वज्ञत्वाऽभावात् । द्वैताऽदृष्टत्वे तु शिष्याऽनुपलम्भादेव तद्योगादिति । अस्मन्मते तु—

नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः ।
न चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः ॥
परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ।
न जगद्विस्मृतिर्नोचेज्जीवन्मुक्तिर्न संभवेत् ॥

इतिप्रमाणात्तत्वधियां द्वैतमिथ्यात्व एव पक्षपातो न द्वैतलोप इति नानुपपत्तिगन्धोऽपि । अत एतस्य "तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादिश्रुतिभिरुक्तः प्रारब्धभोगोऽपि सङ्गच्छते ।

ननु कथं सङ्गच्छते—

यदा पञ्चाऽवतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥

इत्यादिश्रुतौ, वासिष्ठे च—

इमां सप्तपदां भूमिं त्वं समाकर्णयानघ ।
नानया ज्ञातया भूयो मोहपङ्के निमज्जसि ॥
वदन्ति बहुभेदेन वादिनो योगभूमिकाः ।
मम त्वभिमता नूनमिमा एव सुखप्रदाः ॥
अवबोधं विदुर्ज्ञानं तदिदं साप्तभूमिकम् ।
मुक्तिस्तु ज्ञेयमित्यास्ते भूमिका भूमिकाऽन्तरे ॥
ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥

सत्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥
आसामन्तस्थिता मुक्तिर्यस्यां भूयान्न शोचति ।
एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥
किं मूढ इव तिष्ठामि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥
शास्त्रसज्जनसंपर्कैर्वैराग्याऽभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वरक्तता ।
यत्र सा तनुताभावाऽऽत्मोच्यते तनुमानसा ॥
भूमिकात्रितयाऽभ्यासाच्चित्तेऽर्थविरतेर्वशात् ।
सत्यात्मनि स्थिते शुद्धे सत्वापत्तिरुदाहृता ॥
दशाचतुष्टयाभ्यासादसंसर्गफला भृशम् ।
आभ्यन्तराणां बाह्यानां पदार्थानां च भावनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनाऽवबोधनम् ।
पदार्थभाविनी नाम षष्ठी संजायते गतिः ॥
भूमिषट्कचिराऽभ्यासाद्भेदस्यानुपलम्भतः ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा स्मृतिः ॥
एषा हि जीवन्मुक्तेषु तुर्याऽवस्थेह विद्यते ।
विदेहमुक्तविषये तुर्यातीतमतः परम् ॥

इत्यादिवाक्यनिकरेण भूमिकाजयलब्धाद्वितीयात्मापरोक्षप्रमाया द्वैतादर्शन एव पक्षपातकथनात् । इतरवृत्तिनिरोधेच्छासहकृतेन

समाधिनैव तदानीं द्वैतादर्शनस्योपपत्तेरिति "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" (यो०सू०४-२९) इतिसूत्रयता पतञ्जलिनापि तथाबोधनात् । तथा चास्य कथं भोगः कथं वा सेव्य-सेवकभावनिबन्धना भक्तिः स्यादिति चेत् । माऽस्तु भोगः, तदीय-क्लेशनिचयस्य विवेकज्ञानवह्निदग्धबीजभावत्वाद् विषयसौन्दर्यधी-पूर्वा रतिविशेषरूपा भक्तिस्तु स्यादेव । यतः—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥(भ०गी० ६-२०)

इतिवाक्यनिकरेण भगवता श्रवणादिपरिपाके च साक्षात्कृता-त्मतत्वस्य समाधौ कूटस्थस्वाभिन्ने ब्रह्मणि सच्चिदानन्दघनेऽनव-रिच्छिन्ने रतिविशेषरूपं प्रेम, व्युत्थाने तु दग्धघटवत्प्रमातत्वादिव्य-वहारमनुसृत्य कीर्तनाऽऽदिभक्तिः "सततं कीर्तयन्तो माम्" इत्यादिना प्रतिपाद्यते । अत एव श्रीभागवते—

त्वदवगमीनवेति भवदुत्थशुभाशुभयो-
गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुणगीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥

इतिपूर्वोत्तरार्धाभ्यां समाधिव्युत्थानावस्थाभेदेन सगुणनिर्गुण-भक्तिभेदो वर्णितः । तथाहि । तत्रायमर्थः, हे भगवन् त्वदवगमी—श्रवणाद्यभ्यासबलेन त्वत्स्वरूपज्ञानवान्, भवतः—विदितात्सकाशात्, उत्थे-उत्थिते, दूरीभूते शुभाशुभे तयोः सुखदुःखयोः कर्मणि षष्ठी, तेन जानाति, अपि च तर्हि तदानीं देहभृतां प्राणिनां, गुणविगुणा-

न्वयान्–उत्तमत्वाधमत्वसम्बन्धान् । नवेति इत्यनुषज्यते । तथा गिरः–शब्दादीन् विषयांश्च नवेति । अत्रानात्मादर्शनेनैव तद्भक्ति-र्लब्धा इतरादर्शनेनैव तद्दर्शनस्य तद्भक्तिपर्यवसायित्वात् । यथा रासपञ्चाध्याय्याम्—

अपरानिमिषद्दृग्भ्यां तुषाण तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा ॥
तां काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च ।
पुलकाङ्ग्युपगूह्यास्ते योगीवानन्दसंप्लुता ॥
सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ।
जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥

इतिसमाध्यवस्थामुक्त्वा व्युत्थानाऽवस्थामाह—अनुयुगमिति । युगं मिथुनं चिज्जडैक्यं प्रमातृत्वं दग्धपटवदनुवर्तमानमनुसृत्येत्यर्थः । अन्वहं अहङ्कारममकारावनुसृत्य सगुणस्य श्रीकृष्णादेर्गीतं गुण-कर्मजन्मवर्णनं तस्य परम्परया सातत्येन पूर्वोक्तं नवेतीत्यनुषज्यते । समाधौ विद्वान् स्वाऽभिन्नभगवत्स्वरूपप्रेमाऽऽनन्दनिमग्नत्वात्तत्सर्वं नवेति, व्युत्थिते तु भगवद्गुणगानानन्दनिमग्नत्वादिति । अत उत्तमाधमजातिव्यवस्था कर्मकाण्डादिप्रामाण्यं च तत्पूर्वमेव न तदूर्ध्वमितिभावः ।

ननु विद्वदविदुषोर्व्यवहारः समानः 'पश्वादिभिश्चाविशेषात्' इतिन्यायात् । तथा च व्युत्थाने विद्वान् कर्म वा पुत्राद्यभिमानं वा कुतो नानुसरति तत्राह—श्रवणेति । यतोऽपवर्गगतिस्त्वं मोहलक्षणः प्राप्याऽऽत्मा त्वं मनुजैः–अधिकारिभिः श्रवणेन–भगव-

त्कथाश्रवणादिप्रणाड्या भृतो–धृतः साधकदशायाम्, अतः सिद्ध-दशायामपि ते संस्कारदार्ढ्यात्तदेवाऽनुष्ठन्ति न कर्माऽऽदीत्यर्थः। जनकादिवत्कथंचिदनुतिष्ठन्तोपि न तैः संश्लिष्यन्ते, अभिमाना-भावादिति भावः। ननु समाधाविवाद्वितीयात्मदर्शनतो व्युत्थानेऽपि स्वरूपानन्दमग्नास्ते मातृमानादिभेदव्यवहारं स्वप्नवत्पश्यन्तः कुतो न त्यजन्तीति प्रारब्धस्यावश्यंभाविफलत्वाद्भोगेन तत्क्षयायैव तन्न त्यजन्तीत्यवेहि। तत्रापि संसारासारतां जानतां भगवद्भक्तावेव, परेच्छया त्वन्यत्रापि प्रवृत्तिरिति विवेकः। ननु कथं भगवद्भक्तौ प्रवृत्तिः। भक्तेर्धर्मार्थकाममोक्षेषु पुरुषार्थेष्वनन्तर्भावा-दितिचेन्नैवम्। धर्मार्थकामानां स्वतः पुरुषार्थत्वे गौरवादननुग-माच्च धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्। तस्य मोक्षसमीपवर्तितया मोक्षान्तर्भूतत्वं योगजधर्मजन्यतया धर्मान्तर्भूतत्वं वा यथा, तथा भक्तिसुखस्यापि भागवतधर्मजन्य-तया धर्मान्तर्भावस्य श्रद्धाजडान् प्रति वक्तुं शक्यत्वात्, भक्तस्य संसारमोचावश्यकत्वान्मोक्षान्तर्गतो वा भक्तियोगः। तस्मात्पुरुषा-र्थचतुष्टयान्तर्गतत्वेन स्वातन्त्र्येण वा भक्तियोगः पुरुषार्थः परमा-नन्दरूपत्वादिति स्थिते तमुद्दिश्य विवेकिनां प्रवृत्तिरुचितैवेत्यास्तां विस्तरः॥ २३॥

अथ सर्वाधिकारत्वादेव मलिनान्तःकरणानामपि राजसता-मसानां सत्सङ्गे सति तत्राधिकारः संपद्यत इत्यभिप्रेत्य तत्राधिका-रोऽस्तीत्याह –

## अतो ह्यविपक्कभावानामपि तल्लोके ॥ २४ ॥

अत इति । यतः सर्वेषामधिकारोऽतो हेतोः, अविपक्कभावानामपि—निन्द्यजातिस्वभावात् प्राक्संचितदुष्कृतनिचयाद्वा अशुद्धान्तःकरणानामपि, तल्लोके भगवद्भक्ते सत्यधिकारः संपद्यते भक्ताविति विशेषेणार्थः ? ।

यत्पादसंश्रयाः सूत मुनयः प्रशमाऽयनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ (श्री.भा.१,१,१५)
तुलयाम लवेनापि न स्वर्गं नाऽपुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताऽऽशिपः॥(श्री.भा.१,१८,१३)
न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः ॥
व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गाऽपहो हि माम् ॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाऽप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगे युगे ॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवाऽऽदयः ॥ (श्री.भा.११,१२,१-७)

इत्यादिना सत्सङ्गमात्रेण कृतार्थताया उक्तत्वात् । अत एवात्र 'सत्कर्मस्विति विहाय तल्लोक' इत्युक्तम् । सेवितानामपि सत्कर्मणां भगवत्परत्वाहेतुत्वात् ॥२४॥

ननु मलिनाऽमलिनयोः समानशुद्धत्वे भगवत्प्राप्तिरपि तुल्यैव स्यात्तत्राह—

क्रमैकगत्युपपत्तेस्तु ॥ २५ ॥

क्रमैकेति । तुशब्दः शङ्काव्यवच्छेदाऽर्थः । उपपत्तिः-प्रमाणम्, गतिः-प्राप्तिः, क्रमेणैकस्य—परमात्मनः प्राप्तौ प्रमाणसद्भावान्न भगवत्प्राप्तिस्तुल्या किन्तु मलिनानान्तु व्यवधानेनेति भावः । प्रमाणन्तु—

अन्येऽपि ये विकर्मस्थाः शूद्राऽऽद्या नीचजातयः ।
भक्तिमन्तः प्रमुच्यन्ते कालेन मयि सङ्गताः ॥

इतीश्वरगीताऽऽदिवाक्यमित्यास्तां विस्तरः ।

अथवा भजनस्य सर्वाऽधिकारित्वे भगवल्लोकगमनव्यवस्था कीदृशी तत्राऽऽह-अतो ह्यविपक्केति । यतः सर्वाऽधिकारोऽत औत्सर्गिकं निन्द्यजातिस्वभावाद् ब्रह्मसाक्षात्काराऽनुदयादपरिपक्काऽनुरागाणां जीवानामपि । अपिना तल्लोककामानां कीर्तनाऽऽद्यवैयर्थ्याय तल्लोके-भगवल्लोके गमनमित्यर्थः ॥२४॥

ननु तल्लोके परिपक्काऽनुरागाणामकामानामपि गमनमस्तु तत्राऽऽह—क्रमैकेति । तुशब्दः शङ्कानिरासाऽर्थः । न सर्वेषां गमनम्-

ये तु निष्कलुषा लोके पुण्यपापविवर्जिताः । (भा०शां०अ० ३४६)

इत्युपक्रम्यादित्यमण्डलद्वाराऽनिरुद्धप्रद्युम्नसंकर्षणेन व्यूहक्रमेण गतिमभिधाय—

समाहितमनस्कास्तु नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ (भा०शां०अ० ३४६)

इति क्रमेण वासुदेवगत्यभिधानात् । ततः पश्चात्—

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
तेषां त्वया विनिर्दिष्टा पारम्पर्यक्रमाद्गतिः ॥
चतुर्थ्यां चैव ते गत्यां गच्छन्ति परमं पदम् ।
नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः ॥
अगत्वा गतयस्तिस्रो यद्गच्छन्त्यव्ययं हरिम् । (भा०शां०अ० ३५०)

इति तत्रैव भगवत्प्राप्त्यैकगत्यभिधानाच्च । तथा च वाक्यद्वयाविरोधाय पक्काऽपक्काऽनुरागभेदेन गतिभेद इत्येव कल्पनीयम् । परिपक्वाऽनुरागाणां "न तस्य प्राणा उत्क्रामन्ति" इति श्रुतेर्मार्गगत्यभावेन भगवदभेदरूपा भगवत्प्राप्तिः, अपरिपक्वाऽनुरागाणान्तु साधनभक्त्या तल्लोकप्राप्तिरिति ।

ननु कथमविपक्वानां साधनभक्त्या तल्लोकप्राप्तिरुच्यते । तत्वज्ञानद्वारैव तस्यास्तत्साधनत्वस्य प्राग्व्यवस्थापनात् । तत्वज्ञाने च वेदान्तविचारस्याऽपि हेतुत्वात्तस्य ज्ञानोद्देशेन "श्रोतव्य" इत्यादिविधिविहितत्वात्, विचारे च "शान्तो दान्त" इत्यादिश्रुत्युक्तशमाऽऽदि साधनचतुष्टयस्यैवाऽधिकारान्मलिनानान्तत्राऽधिकाराऽभावादिति चेद्, नैवम् । वेदान्तविचारेऽधिकाराभावेऽपि तत्वज्ञानं प्रति साधनभक्तिवेदान्तविचारयोर्वैकल्पिकहेतुत्वेन वेदान्तविचारं विनाऽपि साधनभक्त्यैव तत्त्वज्ञानद्वारा तत्प्राप्तिसंभवात् । न चाल्पायाससाध्याया भक्तेः कष्टसाध्येन विचारेण कथं विकल्प इति वाच्यम् । विचारस्येव श्रवणा-

दिभक्तेरपि स्वफलजनने वस्तुतो यज्ञाऽऽद्यनुष्ठानसाध्यश्रद्धासापेक्षत्वादायासाविशेषेण विकल्पसंभवात् । यद्यपि पापनिवृत्तिरूपफलं प्रति भक्तेः श्रद्धानिरपेक्षत्वमुक्तं, तथापि-

जातश्रद्धो मत्कथादौ निर्विण्णः सर्वकर्मसु ।
वेद दुःखाऽऽत्मकान्धर्मोन्परित्यागेऽप्यनीश्वरः ॥
ततो भजेत मां भक्त्या श्रद्धालुर्दृढनिश्चयः ॥

इत्यादिवाक्यान्मोक्षं प्रति श्रद्धासापेक्षत्वमस्त्येवेति स्वयं बोध्यम् । नन्वथापि विकल्पो न संभवति, विचारस्येव भक्तेस्तात्पर्याऽवधारणहेतुत्वाभावेन द्वारैक्याभावात् । व्रीहियवयोर्द्वारैक्यादेव विकल्पाऽभ्युपगमादितिचेत्, सत्यम् । यद्यप्यत्र द्वारभेद एव । यथा वेदान्तविचारे ब्रह्मणि तात्पर्याऽवधारणेन प्रमाणासंभावनानिवृत्तौ मननादिना प्रमेयासंभावनाद्यपसारिते तत्वसाक्षात्कारोदये मुक्तिः । श्रवणाऽऽदिभक्त्या तु भगवदनुग्रहेण तत्वसाक्षात्कारपरवैराग्यप्रेमभक्त्युदये मुक्तिरिति । यथोक्तं श्रीभागवते—

भक्तिः परेशाऽनुभवो विरक्ति-
रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाऽश्नतः स्यु-
स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥
इत्यच्युताऽङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥ इति ।

अत्र प्रपद्यमानस्येति साधनभक्त्युपन्यासः । भक्तिः-प्रेमलक्षणा, परेशाऽनुभवः—भगवन्मूर्तिस्फूर्तिः, अन्यत्र-गृहाऽऽदौ विरक्तिः, एष त्रिक एकस्मिन्काले भगवदनुग्रहतो भवति । 'ददामि बुद्धियोगं तम्' (भ०गी० १०-१०) इति वाक्यान्तरस्वारस्यादिति भावः । यथाऽश्नतो-भुञ्जानस्य, तुष्टिः-सन्तोषः, पुष्टिः-धातुजा (शरीरजा), क्षुधाध्वंसश्चेत्येष त्रिक एककाले भवति, अनुघासं-घासं घासम्, एवं प्रतिभजनं प्रेमाऽऽदित्रिके जायमाने, अनुवृत्त्या-नैरन्तर्येणाच्युताङ्घ्रिं भजतो भगवति भक्तिः-परमं प्रेम, यथा प्रह्लादाऽऽदेः, विरक्तिरपि पूर्णा वान्तकर्तुरिव वान्ते, भगवत्प्रबोधः पूर्णा भगवन्मूर्तिस्फूर्तिः स्वरूपाऽवबोधश्च । एते त्रयोऽपि भागवतस्याऽनन्यरतस्य भवन्ति, ततः पूर्णा भगवत्कृपा, ततः परां शान्ति-मोक्षं प्राप्नोतीति । तस्मादत्र द्वारभेदादविकल्प एव । द्वारभेदे प्रयाजाऽवघातयोर्विकल्पाऽदर्शनात् । तथाप्यत्र हरिभक्तिवेदान्तविचारयोरेकप्रयोगविधिपरिगृहीतत्वाऽभावाद् द्वारभेदेऽप्युद्भिद्बलभिद्यागयोरिव विकल्पोऽभ्युपेयत इत्यास्तां विस्तरः ।

ननु कथं विकल्पः, तस्याऽष्टदोषदुष्टत्वात् । तथा हि । यदि हरिभक्तिर्ज्ञानसाधनं तर्हि वेदान्तविचारबोधकवाक्यस्य प्राप्तं प्रामाण्यं परित्यक्तं स्यात्, अप्राप्तं चाप्रामाण्यं स्वीक्रियेत । यदा पुनर्वेदान्तविचारः साधनं, तदा वेदान्तविचारबोधकवाक्यस्य पूर्वत्यक्तं प्रामाण्यं स्वीक्रियेत पूर्वस्वीकृतं चाप्रामाण्यं परित्यज्येत । प्राप्तपरित्यागोऽप्राप्तस्वीकारः त्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टयं वेदान्तविचारावेदकवाक्ये । तथा हरिभक्त्यावेदकवा-

क्येऽपि दोषचतुष्टये योजिते सत्यष्टौ दोषाः सम्पद्यन्ते। तस्मान्न विकल्पो युक्तः, किन्तु कथञ्चिदङ्गाङ्गिभावेन समुच्चय एवोचितः, हरिभक्त्याऽन्तःकरणशुद्ध्या वेदान्तविचारेण ज्ञानप्राप्त्या मोक्षमाप्नोतीतिचेत्। असाध्वेवैतत्। विकल्पस्याऽष्टदोषदुष्टत्वेऽपि व्रीहियवयोरिव प्रमाणसिद्धस्याऽवश्यमभ्युपेयत्वात्। अन्यथा भक्तेः सर्वाऽऽधिकारिकत्वबोधकवाक्यानां प्रत्युत तव मतेऽप्रामाण्यं, हरिभक्तिवेदान्तविचारयोर्निरपेक्षसाधनत्वबाधश्च प्रसज्येत। न चैतद्युक्तम्। तस्माद्विकल्प एव। अपि च समुच्चयोऽङ्गप्रधानभावेन वा, समप्राधान्येन वा। नाऽऽद्यः, एकनरस्याऽङ्गत्वबोधकमानाऽभावात्। नाऽन्त्यः, तुल्याधिकारिकत्वप्रसङ्गादित्यादिकं स्वयं बोध्यमिति संक्षेपः ॥ २५ ॥

सुषुम्णामार्गेण प्राणोत्क्रान्त्या ब्रह्मलोकाऽऽदिगमनमप्यपरिपक्वाऽनुरागाणामेव साधनभक्तिमात्रवतामित्यत्र साधकाऽन्तरमाह—

**उत्क्रान्तिवाक्यशेषाच्च ॥ २६ ॥**

उत्क्रान्तीति। भगवद्गीतायाम्—

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ (अ० ८-१०)

इत्युपक्रम्य—

ओमित्येकाऽक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ (अ०८-१३)

इत्यनेनोक्तायामुत्क्रान्तौ—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ (अ० ८-२४)

इति क्रमगत्याभिधायकवाक्यशेषात् । एवं श्रुतावपि "तयोर्ध्वमायन्नमृतत्वमेति" इत्यादिनोक्तायामुत्क्रान्तौ । "यस्त्वेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः सामभिरुन्नीयते ब्रह्मलोकम्" इत्यादिवाक्याऽन्तरात्तल्लोकेऽविपक्कानां गमनमित्यनुषङ्गेणाऽर्थः । अयं भावः । परिपक्काऽनुरागाणामपि तल्लोकगमने तत्र गौणभक्त्यनुष्ठानं न स्यात् । ब्रह्मसाक्षात्कारपरमानुरागाभ्यामेवोक्तदिशा मुक्तिसंभवात् । ननु तच्छ्रवणमर्थवादो, लोकसंग्रहाऽर्थं वा तेषामनुष्ठानम् । अन्यथा—

यतो विधिनिषेधेषु मनुष्याणामधिक्रिया ।
अतः पशुपिशाचाद्या धर्माऽधर्मेऽवरा मताः ? ॥
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।

इत्यादिवाक्यविरोधाऽऽपत्तेरितिचेन्न । तेषामसंभवद्देवाऽऽद्यधिकारज्योतिष्टोमाऽऽदिबहुतरकर्माभावविषयत्वात् । अत एव "तदुपर्यपि बादरायणः संभवात्" (ब्र०सू०-१-३-२६) इत्युपासनाऽधिकारे संभवमेव हेतुमाह स्म द्वैपायनः । एवं चाऽश्वमेधाऽऽदिकरणमेव तेषां लोकसंग्रहाऽर्थं ज्ञानिनामिव भगवदवताराणामिव वेति दिक् ।

अथ प्रसङ्गादुत्क्रान्तिर्गमनमागमनं च विचार्यते । तथाहि । प्रथमं वागिन्द्रियवृत्तिर्मनस्येकीभवति, मनोवृत्तिश्च प्राणेषु, प्राणाश्च

विद्याकर्माद्युपाधिके जीवे, जीवस्तु देहबीजभूतेषु भूतसूक्ष्मेषु, ततो हृदयाऽग्रदीप्त्या प्रकाशितद्वारवान् सर्वोऽप्युत्क्रामति । तत्राऽविद्वान् लोकाऽन्तरप्राप्तये चक्षुरादिस्थानेभ्य उत्क्रामति, विद्वांस्तूपासनामाहात्म्याद्भगवताऽनुगृहीतः सुषुम्णाऽऽख्यया मूर्धन्यनाड्योत्क्रामति, "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः । एवमुत्क्रामत उत्तरमार्गेण गमनम् । स च मार्ग इत्थम्—आदौ अर्चिर्देवतां, ततो दिनदेवतां, ततः शुक्लपक्षदेवतां, तत उत्तरायणदेवतां, ततः संवत्सरदेवतां, ततो देवलोकं, ततो वायुं, वायोरादित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, विद्युल्लोकाद्वरुणलोकं, तत इन्द्रलोकं, ततः प्रजापतिलोकं प्रतिपद्यते, ततस्तं पुरुषं ब्रह्मलोकादागतोऽमानवः पुरुषो ब्रह्मलोके ब्रह्मपुरुषं प्रापयति । अयमेव मार्गो देवपथ इत्युच्यते । श्रुतौ देवैरर्चिरादिभिर्गमयितृत्वेनोपलक्षितत्वात् । अयमेव ब्रह्मपथ इत्युच्यते । प्राप्तव्यत्वेन ब्रह्मणोपलक्षितत्वात् । एतेन गच्छन्तः पुनर्नावर्तन्ते पुरुषाः । सोऽयं मार्गः परमेश्वरोपासकानामेव । कर्मिणान्तु दक्षिणो मार्गः पितृयाणाऽऽख्य उक्तः श्रुतावेव । स यथा—प्रथमं धूमाऽभिमानिनीं देवतां, ततो रात्रिदेवतां, ततः कृष्णपक्षदेवतां, ततो दक्षिणाऽयनदेवतां, ततः पितृलोकं, ततश्चन्द्रं, ततस्तत्र देवसेवाकर्मणि नियोज्यन्ते। ततः कर्मसु क्षीणेषु मर्त्यलोकमाजिगमिषवः प्रथममाकाशेनैकीभूय, ततो वायुनैकीभूय, वृष्टिद्वारा भुवि समागता अन्नरूपेण पुंसि रेतोरूपेण सन्तो योषिति योनौ सिक्ता योन्यनुसारिणो जायन्ते । ते च नवमे मासि सर्वलक्षणसंपूर्णे गर्भे विविधदुःखान्यनुभवन्तः पूर्वकृतं कर्म स्मरन्ति भगवद्भजनं चाभिलषन्ति, ततो गर्भान्निःसृता वैष्णवेन वायुना स्पृष्टा

लुप्तधियो भाव्यनुसारि कर्म पुनः कुर्वन्ति, कर्माऽनुसारेण च पुनर्यथालोकभोगम् । पापिनान्तु नाऽयमारोहाऽवरोहक्रमः, किन्तु तृतीयः कष्टतरो मार्गो यमाऽऽलये । तत्र विविधनरकदुःखभोगोत्तरमत्र दन्दशूकाऽऽदिजन्मप्रतिपादनात् । अत्र साधकबाधकोपन्यासस्तु वेदान्तसूत्रे तद्भाष्य इतीह संक्षेपः ।

ननु शुभमनुतिष्ठतां शुभा गतिरशुभमनुतिष्ठतां चाऽशुभा गतिर्भवतीत्युक्तम् । तत्र सञ्चितविविधकर्मवतां तज्जन्मनि शुभमनुतिष्ठतामन्तकाले पापकर्मजा वा यद्यशुभा गतिः, तादृग्विधानामेवाऽशुभमनुतिष्ठतां च तादृशी शुभा गतिस्तदोत्क्रान्तिनां का वा गतिर्भवेदिति चेत् । उत्क्रान्त्यव्यवहितकाले मत्यनुगुणैव गतिर्भवितुमर्हतीत्यवेहि । अथ "पापः पापेन कर्मणा पुण्यः पुण्येन" इत्यादिश्रुतेस्तत्राऽपि तज्जन्मकृतकर्माऽनुसारत एव गतिर्भवेन्न मत्यनुसारेणेति चेत् "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य" इति श्रुतेरासक्तिविषय एव गतिप्रतिपादकत्वात् । या मतिरन्ते सा गतिरस्येति—

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥ (अ०-८-६)

इति भगवदुक्तेरपि शरीराऽवसानसमयोद्बुद्धवासनात एव तदानीं फललाभ इति प्रतिपादकत्वात् । भरताऽऽदेस्तथैव फलदर्शनाच्चाऽन्तकालभवमत्यनुगुणैव गतिर्भवेन्न कर्माऽनुसारिणी । अथाऽस्तु मत्यनुगुणैव गतिरिति । साऽपि मतिः फलोन्मुखकर्माधीनैव, न तु सन्ततस्मरणाऽऽदिलक्षणदृष्टसामग्रीमात्राऽऽयत्ताऽपि । तथाहि । बहुविधकर्मसु यस्य कर्मणो यादृशो विपाको भावी तदनुगुणवासनाया

एवोद्गमो भवितुमर्हति । "ततस्तद्विपाकाऽनुगुणानामेवाऽभिव्यक्ति-र्वासनानाम्" इत्यादिना सूत्रनिकरेण शास्त्रकृद्भिस्तथैव व्यव-स्थापनात् ।

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ (भ० गी० ३-३३)

इति भगवद्वचनस्य च पुरुषस्वतन्त्रयत्ननिवर्तनेन कर्ममय-प्रकृत्यधीनताबोधकत्वादिति चेत्सत्यम् । फलोन्मुखकर्मणैव सन्त-तस्मरणाऽऽसक्त्यादिना तन्मात्रहेतुभूतादृष्टलेशेन च वासनोद्गमो भवितुमर्हत्येव । 'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च' (भ० ग० ८-७) इति वचसो 'यं यं वापि स्मरन्' (भ०गी० ८-६) इत्यादि वचसः—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ (भ०गी० ३-३४)

इति वचसश्च कर्माऽनधीनपुरुषप्रयत्नमात्रसाध्यसन्ततस्मरणा-सक्त्यादिसूचकत्वात्फलोन्मुखकर्मव्यतिरेकेणाऽपि वासनोद्गमाऽभ्युप-गमे बाधकाऽभावात् । श्रीरामसंग्रामे फलोन्मुखतादृशकर्माभावेऽपि शरीराऽवसानसमयभवभयजनितरामानुसन्धानेन दृष्टसामग्रीभवेन रक्षसां समुद्धारस्य मानसिद्धत्वात् । यथाकथंचिदप्यवसानसमय-भगवदनुसन्धानस्य पुरुषार्थहेतुत्वेनावश्याभ्युपेयत्वात् ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥

इत्यादिस्मृतेरिति दिक् ।

नन्वेवं तर्हि सन्ततानुष्ठितभगवद्भजनस्यापि पुरुषस्य दुष्टसामग्र्या इव दुष्टप्रारब्धस्यापि दुर्वासनोद्बोधकत्वस्य संभवात्तदुद्बुद्धदुर्वासनामाहात्म्यादनुद्धारप्रसङ्गो दुर्वारः । श्रूयते च भरतस्य राजर्षेः । तथाचावसानसमयभवस्मरणस्य प्रारब्धायत्तत्वसंभवेनेदानीन्तनानामन्तकालभवदुर्वासनोद्गमशङ्कयानाश्वासप्रसङ्गो दुर्वार इति चेत् । बहुतरोपदेशेऽपि सदसदभ्यासाऽप्रवृत्तेरनुपदेशेऽपि तत्र प्रवृत्तेर्विलक्षणे एव केचित् संचितसदसत्कर्मणी वासनाप्रवर्तके भवतः । बहुतरोपदेशेऽपि सदसदभ्यासाप्रवृत्तिर्बलवत्तरप्रतिबन्धकाद्वा भवतीति निर्णयम् । एवञ्च प्रतिबन्धकाभावे सति प्रवर्तककर्मौन्मुख्याभावेऽपि बहुतरोपदेशादिभेदेन सदसदभ्यासो भवेत् । तथा च प्रतिबन्धकाऽभावे सति सत्पुरुषोपदेशभगवदनुचिन्तनेन सन्ततभवेन बलवत्तरविरुद्धकर्मणामप्यभिभवादवसानकालभवेन सर्वविरुद्धकर्मणां विनाशादवसानकालात्पूर्वं विरुद्धप्रारब्धस्याभिभवेन विरुद्धवासनानुन्मेषादन्तकाले सत्स्मरणं भवेन्न वेति नैवानाश्वासः कार्यः । प्रतिबन्धकाभावे सति जायमानं भगवदनुचिन्तनमसत्संगत्यादिदुष्टसामग्रीसंभवा दुर्वासना तु नाभिभावयति न वा नाशयति । अत एव भरतस्य विपरीतफलमसत्संगत्यधीनासद्वासनायत्तं श्रूयते । एवञ्च भरतादावसद्वासना संगत्यधीना न प्रारब्धाऽधीनेति प्रारब्धायत्तासद्वासनोद्गममाशङ्क्य नैवानाश्वासो विधेयः । तथा च पुरुषेण भगवच्चिन्तनपरेण दुष्टद्वारा प्राप्यमाणासत्सङ्गतिः परिहार्यैव, असत्सङ्गतिर्बलवत्तरप्रारब्धेन संभाव्यमानाऽपि सत्संगत्यान्ते सदसद्विवे-

चनेन भगवच्चिन्तनरूपेण दृष्टप्रयत्नबाहुल्ये सति विरुद्धकर्माभिभवात्तत एव सुपरिहारा भवेत् । एवञ्च दृष्टप्रयत्नः सद्विषयोऽवश्यं सत्संगत्या संपादनीय एव, सत्कर्मपक्षपातिसत्वांशस्य प्रबलत्वेन दृष्टविधया संपाद्यमानसत्संगत्यधीनसत्वोत्कर्षेण भगवच्चिन्तनाभिवृद्ध्या निरुक्तदिशा सदितरसङ्गत्यादेरपि निवारणसंभवात् ।

अत्राऽयं विभागः । सत्वं स्वभावत एवेच्छापूर्वकमनिच्छापूर्वकं वा बलवत्, इच्छाधीनन्तु सुतरामेव बलवत् । अनिच्छाऽऽयत्तभगवन्नामाऽऽदिवशेनाऽप्यजामिलादेः समुद्धारदर्शनेनेच्छाधीनसत्वे बलोत्कर्षौचित्यात् । दुष्कर्म तु सत्वाधीनभगवच्चिन्तनादिना यथायोगमभिभाव्यं नाश्यञ्च । तमोरूपत्वाद्दुष्कर्मणः । यथा हि इच्छाऽनिच्छाभ्यामासक्त्यनासक्तिभ्यां च सुकृतदुष्कृतयोस्तारतम्यमस्त्येव, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वचनात् । इच्छानिच्छाकृतपापप्रायश्चित्तगौरवलाघवदर्शनाच्च । एवं सुकृतदुष्कृतयोर्दुष्कृतमतिदुर्बलम्, सुकृतन्तु प्रबलमेव । दुष्कृतस्यापरोक्षज्ञानमात्रनाश्यतया सुकृतस्यापरोक्षज्ञानासंश्लेषयता "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" "इतरस्याप्येवमसंश्लेषपाते तु" ( ब्र० सू० ४, १, १३-१४ ) इत्यादिसूत्रतो बोधनात् । दुष्कृतस्य सद्वासनासमुद्भूतभगवन्नामाऽऽदिस्मरणनाश्यतयाजामिलोपाख्यानादिना सुकृतस्यासद्वासनासंभूतस्मरणाभिभाव्यत्वेन 'न हि कल्याणकृत्कश्चित्' (भ० गी० ६-४०) इत्यादिवचनेन भरतोपाख्यानेन च स्पष्टं बोधनात् । एवं सदसद्वासनयोः समुन्मेषेण सदसदनुस्मरणे सुकृतदुष्कृतकर्मविशेषफलौन्मुख्यायत्ते

अत्यभ्यासायत्ते वा दत्तफलकर्मलेशायत्ते वा । तत्र दृष्टसामग्रीतो मुहुर्मुहुरभ्यासेन दृढतरवासनासमर्जने तु सदसद्वा कर्म फलोन्मुखमपि न स्वानुकूलवासनामुन्मेषयेत् । दृढतराभ्यासायत्तवासनायाः फलोन्मुखसदसत्कर्मप्रतिकूलायास्तत्प्रतिबन्धकस्वरूपत्वात् । एवं चायासाधीनासद्वासना चरमसमयगता फलोन्मुखमप्यसत्कर्म यथायोगमभिभावयेन्नाशयेद्वा । तथाहि । षड्विधं कर्म—केवलसात्त्विकं, सात्त्विकराजसं, सात्त्विकतामसं, राजसं, राजसतामसं, तामसं चेति । तत्र केवलसात्त्विकं भगवद्ध्यानादि, निःशेषं सकलपापहरम् । सात्त्विकराजसं हिंसारहितकायक्लेशाऽऽदि सन्ध्यादिकर्म प्रायेण दुष्कर्मविशेषहरम् । सात्त्विकतामसं — हिंसासहितनित्यकर्म पापसंवलितं पापविशेषहरम् । राजसं—हिंसारहितं काम्यं, कर्मफलभोगानुकूलचित्तनैर्मल्यकरं न पापहरम् । राजसतामसं—हिंसासमेतं काम्यं, भोगानुकूलचित्तनैर्मल्याधायकमपि दुःखसंवलितसुखाधायकम् । केवलं तामसं—शास्त्रनिषेधलक्षणं हिंसारहितं हिंसासमेतं च दुःखैकसाधनं चित्तकालुष्यकरम् । प्रायश्चित्तं च त्रिविधम् । सात्त्विकराजसं सात्त्विकतामसं केवलसात्त्विकं चेति । सात्त्विकराजसं हिंसारहितं कायक्लेशादिमत्पूर्वोपात्तद्वितीयकर्मण्यन्तर्भूतम् । सात्त्विकतामसं हिंसासमेतं पापहरं तृतीये कर्मण्यन्तर्भूतम् । केवलसात्त्विकं भगवद्ध्यानादिलक्षणं प्रथमे कर्मण्यन्तर्भूतमितिनातिरेकशङ्का । एवञ्चाऽभ्यासाऽधीना तावदसद्वासना फलोन्मुखमपि सत्कर्माभिभावयितुमिष्टे न नाशयितुम्, 'सदा तद्भावभावितः' (भ० गी० ८-६) 'न हि कल्याणकृत्कश्चित्' (भ० गी० ६-४०) इत्यादिवचनेनासद्वासनायाः सत्कर्मनाशकत्वाभावावधारणात् । एवं

सत्संगतिकरासत्संगतित्यागपरवचनमहिम्ना दृढतराभ्यासजनिते सद्-सद्वासने अवसानसमयाप्रभवे अपि स्वविरुद्धे कर्मणी फलोन्मुखे अपि यथायोगमभिभावयत एव । तत्रापि भगवदनुचिन्तनजनितवासना त्ववसानसमयभवाप्यसत्कर्म स्वगतदार्ढ्यतारतम्येनाभिभावयेन्नाशयेच्च। तथैव प्रमाणनिकरैरवगमात् । एवं यद्यवसानकाले सत्कर्म फलोन्मुखं सत्स्मरणेन संवलितं, यद्वाऽसत्कर्म फलोन्मुखं सदसत्स्मरणसंवलितं तर्हि तत्र सत्फलमसत्फलं चातिपुष्टमेव । यदा तु कर्मस्मरणे विजातीये तर्हि तत्रासत्स्मरणमवसानकालभवं सत्कर्माऽभिभाव्य स्वीयं फलमेव दद्यात् । अवसानकालभवसत्स्मरणन्तु भगवदनुचिन्तनदार्ढ्यभवं यथाकथंचिदपि वा जातमसत्कर्म सर्वमपि नाशयत्स्वयं फलदं सत्सत्कर्माप्यपरमभिव्यञ्जयेत् । इन्द्रादिस्मरणन्तु फलोन्मुखमप्यसत्कर्माभिभाव्य सत्कर्म व्यञ्जयेत्स्वयं च स्वशक्त्यनुरूपं फलदं भवेत् । न तु तत्राऽसत्कर्म विनाशयेत् । असत्कर्माभिभूतं कालान्तरे फलदं तत्रेति विवेकः । तत्रावसानसमये सद्दृशाद्दृष्टचिन्तादिजनितं सदसदर्थस्मरणं समयस्वाभाव्यादतिप्रबलं सत्सत्वरं स्वानुरूपमेव फलं प्रयच्छेत् । फलोन्मुखकर्मान्तरन्तु स्वयमनष्टं चेत्पश्चादेव फलदमिति तत्वम् । अत्र 'सदा तद्भावभावितः' ( भ० गी० ८-६ ) 'तस्मात्सर्वेषु कालेषु' ( भ० गी० ८-७ ) इति निर्देशाद्वासनादार्ढ्यमदृष्टसद्दृशदर्शनाद्यायत्तस्मरणं मनसि दृढमनुपेक्षाऽऽत्मकं निवारयेदितिसूचितम् । एवं च सद्वासनादार्ढ्यं दृष्टसामग्रीतो यत्नविशेषेण संपादनीयमेव, शुभमात्मन इच्छतो मनुष्ययत्नस्य प्रारब्धापेक्षयापि परिणतौ बलवत्त्वात् । केवलादृष्ट एव

भारनिक्षेपानौचित्यात् । 'दैवं पुरुषकारश्च' इति वचनात् । इतरथा कर्मवशादेव फलं भवतीति लौकिकयत्नबोधकशास्त्रस्य पित्रादीना-माचार्याणां च बालकशिक्षणादौ हिताहितविभागेनोपदेशप्रवृत्तेश्चा-नर्थक्यमेव स्यात् । एवं मनुजस्य प्रवृत्तौ ज्ञानायत्तं स्वातन्त्र्यमपि कर्मानधीनं स्वीकरणीयमेव । इतरथा प्रारब्धायत्तमेव पश्वादिवन्मनु-ष्यप्रवर्तनमिति पश्वादिवदेवानधिकारात्पापपुण्यास्पर्शप्रसङ्गात्, पापपुण्यप्रायश्चित्तादि शास्त्रं निष्फलमेव स्यादिति सर्वव्यवहार-व्याकोपेन वर्णाश्रमादिनिखिलव्यवहारो लुप्येत । तस्मात् पुरुषस्य कर्मानायत्तमपि स्वातन्त्र्यं लेशतो ज्ञानद्वारा परमेश्वरदत्तमङ्गीकरणीयम् । एवं च कर्माधीनप्रवृत्तिसंभवात्पुरुषप्रयत्नेन सत्संगत्या सत्कर्मादि-प्रवृत्तिरसत्कर्मादेर्निवृत्तिश्च घटत एव । मनुष्यादौ ज्ञानद्वारेश्वरेण स्वातन्त्र्यनियमनात् ।

'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' "एष एव साधु कर्म कारयति" इत्यादिवचनन्तु साध्वसाधुकर्मद्वारा परमेश्वरायत्तत्वबोधकम् । ज्ञानद्वारा पुरुषाधीनप्रवृत्त्यतिरिक्तविषये कर्मेश्वरप्राधान्यपरं धर्मा-धर्मप्रायश्चित्तादिपरशास्त्रस्य कर्मेश्वरायत्तत्वपरवचसश्च प्रामाण्येन व्यवस्थाकरणौचित्यत् । तत्र पुरुषस्य ज्ञानद्वारा कर्माऽन्तरार्थं प्रवृ-त्तस्य मध्येऽकस्मादिष्टानिष्टप्राप्तिदर्शनेन तत्र कर्मेश्वरप्राधान्यमभ्यु-पेयम् । एवं च ज्ञानायत्तप्रवृत्त्यंशे पुरुषस्वातन्त्र्यफललाभालाभ-विपरीतफललाभादिकं सर्वमपि कर्मेश्वरायत्तम् । एवं च ज्ञानद्वारक-प्रवृत्त्याश्रयणेन धर्माधर्मप्रायश्चित्तादिशास्त्रप्रामाण्यं सिद्धं भवति । अत्रैवं सति प्रयोजनान्तराऽर्थं प्रवृत्तस्य पुरुषस्य मध्य आन्तरालिक-

क्रियाविशेषेण महापुण्यफललाभपरं प्रमाणं तत्पापप्रायश्चित्तपरं वचनं च पुण्यपापविभागज्ञानद्वारकप्रवृत्तिस्वातन्त्र्याधिकारायत्तम् । अत एव ज्ञानद्वारकप्रवृत्तिस्थल इव न फलाधिक्यम् । अत एव च तत्र पापप्रायश्चित्रमत्र स्वल्पमेवाम्नातं संगतं भवतीति दिक् ॥२६॥

महापातकिनामपि भगवत्परायणतायां कथिता दिव्यमार्गगतिः संभवति न वेति सन्देहे, नेति प्राप्तम् । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" ( क० उ० २-२३ ) इत्यनेन भक्तानुपक्रम्य—

नाविरतो दुश्चरितान्नाशान्तो नसमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥

इत्यादिश्रुत्या

श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञोच्छेदी मम द्वेषी मद्भक्तोऽपि न मे प्रियः ॥

इत्यादिस्मृत्या च शुद्धात्मनामेव भगवत्परायणानां तथागतिज्ञापनादित्यत आह-

## महापातकिनान्त्वार्तौ ॥२७॥

महापातकिनान्त्विति । तुशब्दः शङ्कानिरासार्थः । महापातकिनाम्- आत्यन्तिकपतनहेत्वगम्यागमनाऽदिपापपराणां, आर्तौ-अनुतापोऽयत्नसिद्धेः । नामश्रवणकीर्तनादिरूपभक्तौ सत्यां कथिता दिव्यगतिर्भवत्येवेति शेषः ।

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्माऽऽत्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥

( भ० गी० ९-३०-३१ )

महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतम् ।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥

इत्यादिप्रमाणादिति भावः । 'नाविरतः' इतिवाक्यन्त्वननुतप्तविषयं बोध्यम् । अनुतापस्तु पुनः पुनः पापचिकीर्षाप्रतिबन्धको ग्राह्यः ।

नैकान्तिकन्तद्विहितेऽपि निष्कृते
मनः पुनर्धावति चेदसत्पथे ।

इत्यादिना तथाऽवगमादित्यास्तां विस्तरः । पातकिनामिति विहाय महापातकिनामिति कथनन्तु उपपातकिनामनुतप्तानां कैमुतिकन्यायेन तद्गतिलाभाय । भगवतो बादरायणस्यापीदमेवाभिप्रेतम्, "उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्" (वे.सू. ३-४-४२) इति सूत्रेण परमते स्वधर्मप्रव्रज्याऽऽदिच्युतस्य यतिप्रभृतेरुपपातकित्वमङ्गीकृत्य प्रायश्चित्तमिच्छता स्वमते महापातकित्वेऽपि भजनाऽऽदिना शुद्धिज्ञापनात् । अन्यथोदाहृतशुद्धिवाक्यविरोधः स्यादित्यास्तां विस्तरः । केचित्तु आर्तिनिमित्तप्रायश्चित्तस्थानीय एव कीर्तनादावेवाधिकारो महापातकिनां न ज्ञानादावित्यर्थ इत्याहुः ॥ २७ ॥

किमार्तिभक्तिमात्रेणैव सा गतिः, उत परभक्तौ सत्यामेव सेति सन्देहे—आर्तिभक्त्यैव सेति प्राप्तम् । 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां

द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति'इत्यादिना ध्यानाऽऽदिलभ्यफलस्य नामकीर्तनादितोऽपि प्रतिपादनादिति प्राप्त आह—

## सैकान्तभावे गीताऽर्थप्रत्यभिज्ञानात् ॥ २८ ॥

सेति। सा-दिव्यगतिः एकान्तभावे-एकान्तभक्तौ परभक्तौ सत्यामेव संभवति, कुतः गीताऽर्थप्रत्यभिज्ञानात्—गीताऽर्थस्य- "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यादिना कथिताऽर्थस्य गीतायां—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥
( भ० गी० ५-१७ )

इत्यादिना प्रत्यभिज्ञानात्। तद्वदेव ज्ञानपूर्वकप्रेम्णामृतत्व-कथनात्। यथा चैतत्तथोक्तमधस्तात्। 'सैकान्तभावः' इति प्रथमान्त-पाठे तु ननु ज्ञानेनैव सकलपापनिवृत्तौ श्रुतिस्मृतिसूत्रसिद्धायामार्तेर-पेक्षायां मानाभावात्कथमार्तावित्युक्तन्तत्राऽऽह—सैकान्तेति। भवेदिति शेषः। अयमर्थः—मुमुक्षुर्ज्ञान्येव न भवेत्सैकान्तभावोऽपि "आप्रा-यणात् तत्रापि हि दृष्टम्" (वे. सू. ४-१-१२) इति सूचितेनैकान्तेनाव्यभि-चरितेन भावेनापि सहितो भवेत्। कुतः गीताऽर्थप्रत्यभिज्ञानात्। गीतार्थस्यैवं विधस्य 'सर्वधर्मान्परित्यज्य' (भ. गी. १८-६६ ) इत्युक्तस्य प्रत्यभिज्ञानश्रवणात्। यथा नारायणीये—

महोपनिषदो वेदास्ते विप्राः सम्यगास्थिताः ।
यजन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥

ततो विशिष्टं जानामि गतिमेकान्तिनां नृणाम् ।
केनैष धर्मः कथितो देवेन ऋषिणाऽथवा ॥

इतिप्रश्ने प्रत्युत्तरम्—

समुपोढेष्वनीकेषु कुरुपाण्डवसेनयोः ।
अर्जुने विमनस्के वै गीता भगवता स्वयम् ॥

( भार०शां० ३४८, ६-८ ) इति ।

तस्माद्भक्तेरेव मुख्यत्वात्तदपेक्षाया आवश्यकत्वम् । तत्राऽपि प्राप्ताप्राप्तविवेकरीत्या प्रेम्णः फलत्वान्नामग्रहणादिलक्षणाया भक्तेरेव तत्रोपयोग इत्यभिप्रेत्यात्र तथोक्तमिति संक्षेपः ।

परे तु एकान्तभाव इति पूर्वोक्त एकान्तभावः सा पराभक्तिरेव कुतः गीतार्थस्य प्रत्यभिज्ञानात् । एकान्तिनां विशिष्टगतिरूपो धर्मः केन कथित इति प्रश्ने गीतायां भगवता कथितमिति कथनात्, एकान्तिनां भक्तानां दिव्या गतिरित्यर्थोऽवगतः, गीतायां परभक्तेरेव बहुधोक्तेः । तस्माद्भक्तिरेव एकान्तभाव इति भाव इत्यर्थमाहुः ॥ २८ ॥

अतस्तामुत्पाद्यैव सर्वेषामुपायानां श्रैष्ठ्यम् । अन्यथा व्यर्थत्वमेवेत्याशयवानाह—

## परां कृत्वैव सर्वेषां तथा ह्याह ॥ २९ ॥

परामिति । सर्वेषां—ज्ञानान्तानां धर्माणां, परां कृत्वैव-परमेश्वरे परानुरक्तिरूपां परां भक्तिमुत्पाद्यैव, श्रैष्ठ्यं नान्यथेति शेषः । कुतः हि-यस्मात्, तथाऽऽह भगवान्बादरायणः—

धर्मः स्वनुष्ठितः पुंसां विश्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥(भाग० १-२-८)
दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥
(भाग० १२-४७-२४)
न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ इत्यादि ।
( भाग० २-२-३३ )

केचित्तु परां कृत्वैव मोक्ष उपयोग इत्यर्थमाहुः । तन्न सम्यक् । फलभक्त्यवस्थायां मोक्षाकाङ्क्षाविरहात् । उपपन्नश्च प्रेमभक्तानां मोक्षाकाङ्क्षाविरहः, भगवत्येवासक्तत्वात् । एतावती कुतो भगवत्यासक्तिरिति चेत्, परमानन्दरूपत्वादिति कलय । ननु यद्यपि निर्गुणस्येव सगुणस्याऽपि परमानन्दरूपता प्राङ् निरूपिता, तथापि सा माययावृतेति कथं स्फुरेत् । अस्फुरणे च कथं भगवत्यासक्तिरिति चेत् । शृणु । श्रवणकीर्तनादिभक्तिपरिपाके च भगवदनुग्रहतस्तत्त्वबोधादावरणनाशतस्तथेति । कथमन्यथा भगवन्निष्ठस्य प्रेमभक्तस्य मोक्षेऽप्याकाङ्क्षाविरहः—

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्वभौमं न रसाऽऽधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनाऽन्यत् ॥
( भाग० ११-१४-१४ )

इत्यादिना श्रूयमाणः संपद्येत । ननु तथापि प्रत्यगभेदांऽशावरणशक्तिनाशः कथम् ? । रागरूपप्रेमभक्तेर्मूर्तिपरिच्छेदस्फूर्तेश्च सत्वादितिचेत् । भगवदनुग्रहतस्तस्या अपि नाशसंभवादित्यवेहि । 'न वासुदेवभक्तानामशुभं विद्यते क्वचित्' इतिस्मृतेः । अत एव ज्ञानमार्गो भक्तिमार्गश्चेति मोक्षमार्गद्वयम् । अत एव च होमप्रकरणे अनुदितहोमनिन्दावत् गीतासु भक्तिप्रस्तावे निर्गुणनिष्ठा निन्द्यते ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥

( भ० गी० १२,२-५) इति ।

ननु कथं मार्गद्वयमेव—

साङ्ख्येन सर्वभावानां प्रतिलोमाऽनुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यज्यति दौरात्म्यं चिन्तितस्याऽनुचिन्तया ॥

यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममाऽर्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥

( भाग० ११,२०,२२-२५ )

इत्यादौ सर्वत्र रतत्वस्य वैमुख्यपरिहाराय यथाकथंचित्साम्मुख्यमात्रं कर्तव्यत्वेनावगम्यते । तच्च त्रिधा । निर्विशेषरूपस्य तदीयब्रह्माख्याविर्भावस्य ज्ञानरूपम्, सविशेषरूपस्य च तदीयभगवदाद्याख्याविर्भावस्य भक्तिरूपमिति द्वयम् । तृतीयश्च तस्य द्वयस्यैव द्वारं कर्मार्पणरूपमिति । तदेतत्त्रयं पुरुषयोग्यताभेदेन व्यवस्थापयितुं सामान्यतो ज्ञानकर्मभक्तीनामेवोपायत्वं नान्येषामित्यनुवदति भगवानेकादशे—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित् ॥

( भाग० ११-२०-६ ) इति ।

मन एकत्र संयुज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥

( भाग० ११-७-११ )

इति चतुर्थोऽपि मार्गोऽष्टाङ्गयोगाख्योऽवगम्यत इति चेत्सत्यम् । तथापि कर्मयोगमार्गयोरन्तःकरणप्रसादद्वारा ज्ञानभक्त्योरेवोपयोगाज्ज्ञानं भक्तिश्चेति द्वावेव मोक्षमार्गौ । विभिन्नस्वरूपफलसाधनाधिकारिकत्वात् । तथाहि । बुद्ध्यवान्तरजातिर्ज्ञानम् । रागाऽवान्तरजातिर्भक्तिः । सकलानर्थमूलाज्ञाननिवृत्तिर्ज्ञानफलम् । ब्रह्मावाप्तिर्भक्तिफलम् । तत्त्वमस्यादिवाक्यं ज्ञानसाधनम् । भगवद्गुणगरिमग्रथनरूप-

ग्रन्थश्रवणादिकं भक्तिसाधनम् । ब्रह्मविद्यायां साधनचतुष्टयसम्पन्न-स्त्यक्तसंसारोऽधिकारी, भक्तावताद्दशोऽपीति प्रागेवोक्तम् । तस्मात्सिद्धं मोक्षे मार्गद्वयमेवेत्यास्माकीनः पन्थाः । 'यत्तु द्रवीभावानपेक्षाद्वितीयात्ममात्रगोचरा निर्विकल्पकमनोवृत्तिर्ब्रह्मविद्या ज्ञानम् । द्रवीभावपूर्विका मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः । तथा च भक्तिर्ज्ञानावान्तरजातिरेव, तत्र ज्ञानफलं मोक्षः, भक्तिफलन्तु विचारयोगयोरिव ज्ञानमेव । इयांस्तु विशेषः । विचारे साधनचतुष्टयसम्पन्न एवाधिकारी भक्तियोगयोस्तु सर्वोऽपि जन इति । अत एव गीतायाम्—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियाऽर्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चाऽनन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमितिप्रोक्तमज्ञानं यदतोऽन्यथा ॥

(भ० गी० १३,७-११)

इत्यादिना भक्तियोगादिमार्गं ज्ञानमार्गेऽन्तर्भावयता भगवता-

मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते । ( भ० गी० १३-१८)

इत्युत्तरत्र ज्ञानस्यैव मोक्षसाधनत्वमुक्तम् । तस्माद् ज्ञानयोग एवैको मोक्षमार्ग इति । तच्चिन्त्यम् । साध्यसाधनभक्तिभेदेन व्यवस्थाया उपपादितत्वात्फलभक्ते रागावान्तरजातित्वव्यवस्थापनादसदुक्तेरेव प्रामाणिकत्वात् । सूत्रकृन्मते तु भक्तियोग एवैको मोक्षमार्गः । ज्ञानन्तु भक्तिसाधनमेव, न मार्गाऽन्तरम् । अङ्गाङ्गिनोर्विभिन्नमार्गत्वासम्भवादिति । वस्तुतः फलभक्तिर्न साधनम् । किन्तु स्वतः पुमर्थरूपैव मोक्षमपि तृणीकरोति । तदुक्तन्तन्त्रे—

हरिभक्तेर्महादेव्याः सर्वा मुक्त्यादिसिद्धयः ।
भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रताः ॥ इति ॥

अत एवाहुर्वृद्धा अपि—

मनागेव प्ररूढायां हृदये भगवद्रतौ ।
पुरुषार्थास्तु चत्वारस्तृणायन्ते समन्ततः ॥ इति ॥

अत एवात्र तस्याः परत्वमुपवर्णितम् । तत्राङ्गानि कथितानि निबन्धे यथा—

गुरुपादाश्रयस्त्वस्मादीशदीक्षादिशिक्षणम् ।
विश्रम्भेण गुरोः सेवा साधुवर्त्मानुवर्तनम् ॥
सद्धर्मपृच्छा भोगादित्यागो भगवतः कृते ।
तत्तत्क्षेत्रे निवासोऽथ गङ्गादेरपि सन्निधौ ॥
व्यवहारेषु सर्वेषु यावदर्थानुवर्तनम् ।
एकादश्यादिसन्मानो देवव्रतनिषेवणम् ॥
सङ्गत्यागो विदूरेण भगवद्विमुखैर्जनैः ।
बहुग्रन्थमहारम्भशिष्यादीनामसङ्ग्रहः ॥

अन्यदेवानवज्ञा च भूतानुद्वेगदायिता ।
ईशतद्भक्तविद्वेषविनिन्दाद्यसहिष्णुता ॥
धृतिस्तद्देवचिह्नानां तदीयानां च सेवनम् ।
व्यवहारेऽप्यकार्पण्यं शोकाऽद्यवशवर्तिता ॥
अपराधवर्जनं तद्भक्तनामश्रवणादिकम् ।
सर्वथा शरणाऽऽपत्तिरङ्गान्येतानि पालयेत् ॥

तत्र गुरुपादाश्रयो यथा—

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाऽऽश्रयम् ॥
( भाग० ११-३-२१ )

ईशदीक्षाशिक्षणम् । यथा--

तत्र भागवतान्धर्माञ्छिक्षेद्गुर्वात्मदैवतः ।
अमाययाऽनुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥
( भाग० ११-३-२२ )

विश्रम्भेण गुरोः सेवा यथा--

आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥
( भाग० ११-१७-२७ )

साधुवर्त्मानुवर्तनं यथा स्कान्दे—

स मृग्यः श्रेयसां हेतुः पन्थाः सन्तापवर्जितः ।
अनवाप्तश्रमं पूर्वे येन सन्तः प्रतस्थिरे ॥

सद्धर्मपृच्छा यथा नारदीये—

अचिरादेव सर्वार्थः सिध्यत्येषामभीप्सितः ।
सद्धर्मस्यावबोधाय येषां निर्बन्धिनी मतिः ॥

भगवतः कृते भोगादित्यागो यथा पाद्मे—

हरिमुद्दिश्य भोग्यानि काले त्यक्तवतस्तव ।
विष्णुलोकस्थिता सम्पदलोला सा प्रतीयते ॥

तत्तत्क्षेत्रनिवासो यथा—

वैष्णवेष्वथ क्षेत्रेषु द्वारकामथुरादिषु ।
निवासो हरिभक्तानां हरिसायुज्यदो मतः ॥ इति ॥

तथा कौर्म्ये—

वसेदामरणं विप्रो वाराणस्यां समाहितः ।
सोऽपीश्वरप्रसादेन याति तत्परमं पदम् ॥ इति ॥

गङ्गानिवासो यथा महाभारते—

यत्र गङ्गा महाभाग स देशस्तत्तपोवनम् ।
सिद्धक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥
तत्तीर्थसेवाधर्मात्मा मोक्षं प्राप्नोति मानवः ।
मरणे स्मरणं विष्णोर्यद्यप्यत्यन्तदुर्लभम् ॥
तदप्यल्पेन कालेन गङ्गां संसेव्य लभ्यते ॥ इति ॥

यावदर्थानुवर्तनं भगवद्गीतायाम्—

शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् । ( ४-२१ )

एकादश्यादिसन्मानो यथा स्कान्दे—

सर्वपापक्षयकरं सर्वपुण्यविवर्धनम् ।
गोविन्दस्मृतिदन्नॄणां यदेकादश्युपोषणम् ॥

एवं शैवानां शिवरात्रिव्रतादिकमपि यथा लैङ्गे—

शिवरात्रिव्रतं तत्र शिवप्रीतिकरं स्मृतम् ।
यत्कृत्वा पापराशिभ्यो मुक्त्वा शिवपुरं व्रजेत् ॥ इति ॥

देवव्रतनिषेवणं यथा श्रुतौ—

"शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतयः" इत्युपक्रम्य "तस्माद्देवानां व्रतमाचरन्नोङ्कारे परे ब्रह्मणि पर्यवसितो भवेत्" इति । भगवद्विमुखसङ्गत्यागो यथा कात्यायनसंहितायाम्—

वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचित्तविमुखजनसंवादवैशसम् ॥

तथा लैङ्गे—

ईशभक्तिविहीना ये वञ्चयन्त्यखिलाञ्जनान् ।
वर्जयेत्तान्प्रयत्नेन शिवसेवापरो मुनिः ॥

शिष्यग्रन्थाद्यसंग्रहो यथा सप्तमे—

शिष्यान्नैवानुबध्नीयाद्ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥

अन्यदेवानवज्ञा यथा पाद्मे—

हरिरेव सदा ध्येयः सर्वदेवेश्वरेश्वरः ।
इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन ॥ इति ।

भूतानुद्वेगदायिता यथा भारते—

पितेव पुत्रं करुणो नोद्वेजयति यो जनम् ।
विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति ॥ इति।

ईशतद्भक्तविनिन्दाद्यसहिष्णुता यथा दशमे—

निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ।
ततो नाऽपैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥
( भाग० १०-७४-४० ) इति ।

धृतिस्तद्वैष्णवचिन्हानां यथा पाद्मे—

ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिन्हितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रा–
स्ते वैष्णवा भवनमाशु पवित्रयन्ति ॥

यथा वा लैङ्गे—

रुद्राक्षधारिणो ये च भस्मोद्धूलितविग्रहाः ।
नमःशिवायशब्दाश्च ते जगत्पावनाः स्मृताः ॥ इति ।

तदीयानां सेवनं यथैकादशे—

सात्विकान्येव सेवेत पुमान्सत्वविशुद्धये । इति ।

सात्विकानि भगवत्प्रतिपादकशास्त्राचारादीनि ।

व्यवहारेऽप्यकार्पण्यं यथा पाद्मे—

अलभ्ये वा विनष्टे वा भक्ष्याच्छादनसाधने ।
अविक्लवमतिर्भूत्वा हरिमेव धिया स्मरेत् ॥

शोकाऽद्यवशवर्तिता यथा तत्रैव—

शोकामर्षाऽदिभिर्भावैराक्रान्तं यस्य मानसम् ।
कथन्तत्र मुकुन्दस्य स्फूर्तिसंभावना भवेत् ॥

अपराधवर्जनं यथा वाराहे—

ममार्चनापराधा ये कीर्त्यन्ते वहुधेच्छया ।
वैष्णवेन सदा ते तु वर्जनीयाः प्रयत्नतः ॥ इति ।

तन्नामश्रवणाऽदिकं व्याख्यातं प्राक् ।

सर्वथा शरणापत्तिर्यथा भगवद्गीतायाम्—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

( ८-६६ ) इति

अस्याऽर्थः । सर्वेषां–वर्णानामाश्रमाणां देहेन्द्रियमनोबुद्धीनां च, धर्मान्—ब्राह्मणत्वाद्यभ्यासनिबन्धनानग्निहोत्रादीन्सुखदुःखाऽऽदींश्च, परित्यज्य—निर्वेदाद्युपायैस्त्यक्त्वा, मां-सर्वेश्वरं सर्वशक्तिं सर्वनियन्तारं सोपाधिं निरुपाधिं वा परमात्मानमखण्डैकरसमानन्दघनं, एकं–केवलं, शरणं–शृणाति हिनस्त्यविद्याऽऽदीन् क्लेशानिति शरणमाश्रयः परायणं, व्रज—प्राप्नुहि मदेकाऽऽश्रितो भवेत्यर्थः । तदेकाऽऽश्रितत्वं—तल्लीनत्वं तत्प्रणिधानं वा । अथवा—सर्वान्धर्मान्-श्रौतस्मार्तान्, परित्यज्य-शरणत्वेन रक्षकत्वेनाऽऽदृत्य, मां-भगवन्तं, एकं-रक्षितारं जानीहि इत्यर्थः । कर्माणि विधिसिद्ध्यर्थं कार्याणि, विश्वासो भगवति कार्य इति भावः । अथवा—सर्वान्धर्मान्–"त्रयो

धर्मस्कन्धाः" इत्याद्युक्तान् यज्ञाध्ययनब्रह्मचर्यतपआदीन् परित्यज्य-विधितस्त्यक्त्वा, मां-पुरुषोत्तमं क्षराऽक्षराऽतीतं, एकं-केवलं, शरणं-सर्वाऽधिष्ठानं जानीहि इत्यर्थः। संन्यासपूर्वकस्यैव तादृशतज्ज्ञानस्य श्रुतिषु पुमर्थहेतुत्वलाभात्। यथा—

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्वाः।
ते ब्रह्मलोकेषु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे॥ (मुं.३-२-६) इति।

अथवा सर्वान् धर्मान्-वैधान् प्रवृत्तिनिवृत्तिलक्षणान्, परित्यज्य-गोप्यादिवत्स्वरूपतस्त्यक्त्वा, मां-परमप्रेमास्पदं लीलानन्तविग्रहं, एकं—'ब्रह्मणो हि प्रतिष्ठाऽहं' इतिन्यायेन मुख्यं, शरणं-आश्रयं, व्रज-प्राप्नुहि। शरीरेण बुद्ध्या प्रेम्णा वा। तत्र शरीरेण प्राप्तिस्तत्समर्पणतः, बुद्ध्या तत्स्वरूपगुणचिन्तनतः, प्रेम्णा वर्णितया सदानन्दलब्ध्येति विवेकः। विधिमतिक्रम्याप्येवं तत्परायणानां भगवदनुग्रहतः कृतार्थता गोपीप्रभृतीनां पुराणेषु स्पष्टैव। "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"। "लीना ब्रह्मणि तत्परा योनिमुक्ताः" श्रुतिभिश्च ज्ञापितेति संक्षेपः। अथवा मयीत्यर्थे मामिति द्वितीयाऽऽदरणान्मयि शरणं याहीत्यर्थः। शरणमित्यस्य क्रियाविशेषणत्वाच्छरणं यथा स्यात्तथा मां व्रजेति वार्थः। शरणाभिन्नां प्रपत्तिं कुर्विति यावत्। 'शरणन्त्वात्मनिक्षेपकार्पण्यं' इति वचनादात्मनिवेदनं दीनता च। आत्मशब्देन चात्र जीवः स्थूलसूक्ष्मशरीरं वा। तत्र जीवस्य समर्पणं जीवत्वपरित्यागेन तस्मिन्नेकीकरणम्। "तमेतमात्मानमोमिति

ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकृत्य तदेकमजरममृतमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति संहरेदोम्'' इत्यादिश्रुत्या तस्य प्रणिधानत्वेनोक्तत्वात् । शरीरसमर्पणं गवादिसमर्पणवत्स्वसत्तात्यागो व्याख्यातः प्रागेव । दीनता कदाचित्कृपया तत्सन्निधौ तन्मूर्तिसन्निधौ वा स्वस्यानुग्राह्यत्वज्ञापनमित्यास्तां विस्तरः ।

अत्रोपदेशस्य सर्वसाधारणत्वाद्व्रजेदिति वक्तव्ये व्रजेति कथनमर्जुनस्योपस्थितत्वनिबन्धनम् । अत्र च 'अन्नं भुक्त्वैव तृप्यति' इत्यत्रेव हेतुत्वं क्त्वाप्रत्ययार्थः । सर्वधर्मपरित्यागेन शरणं व्रजेत्यर्थः । तत्र सगुणशरणतोक्ता नारसिंहे—

त्वां प्रपन्नोऽस्मि शरणं देवदेव जनार्दन ।
इति यः शरणं प्राप्तस्तंक्लेशादुद्धराम्यहम् ॥ इति ।

व्याख्याता निबन्धे—

तवाऽस्मीति वदन् वाचा तथैव मनसा विदन् ।
तत्स्थानमाश्रितस्तन्वा मोदते शरणागतः ॥ इति ।

निर्गुणशरणता तु प्रपञ्चाभावेन स्वस्मिंस्तज्ज्ञानतस्तद्भ्रतिशालिता । यथोक्तम्—

अनात्माऽदर्शनेनैव परात्मानमुपास्महे ।

इति प्रागेवोक्तप्रायमिदम् । एवंभूतभगवच्छरणस्य सर्वाऽनर्थनिदाननिवृत्तिर्वर्णाश्रमादिधर्मपरित्यागेऽपि भगवत्सङ्कल्पमात्रतो भवतीत्याशयेनाह—अहन्त्वेति । अहं—परमेश्वरः, त्वा त्वां,

सर्वपापेभ्यः—सञ्चितक्रियमाणेभ्योऽवध्यवधाऽऽदिभ्योऽपि मोक्षयिष्यामि, मा शुच—शोकं मा कार्षीरित्यर्थः । इतरप्रायश्चित्तेभ्यो मत्संकल्पस्याधिकत्वादिति भावः । अत्र सर्वपदस्वारस्यात्पापसाधनत्वेन पापरूपाया अविद्याया निःशेषतो निवृत्तिरपीशसंकल्पमात्रतो भवतीति लब्धम् ।

तदुक्तं श्वेताश्वेतरोपनिषदि—

तस्याऽभिध्यायाद्योजनात्तत्वभावा-

द्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ (१-१०) इति ।

अत्राऽभिध्यानात्—निदिध्यासनात्, तत्पूर्वकाद्योजनात्—एकीकरणरूपाभेदज्ञानात्, तत्पूर्वकात्तत्वभावात्-परभक्तितः, अन्ते—वसाने, भूयश्च—पुनरपि, भगवत्कृपातो वैजात्यशालितत्वभावाद्विश्वमाययोर्निवृत्तिरित्यर्थः । तन्निवृत्तिश्च तद्विरोधिरूपस्तादृशतत्वभाव एव । नाशस्य नाशकरूपताया उक्तत्वात् । इत्थं च—वैजात्यशालितत्वभावोपलक्षितस्वाभिन्नभगवत्स्वरूपावाप्तिलक्षणमुक्तिं प्रति स्वरूपावगाहिज्ञानपूर्वकतत्वभावस्य हेतुत्वे पर्यवसानाद् ज्ञानकैवल्ये कैवल्यरूपत्वं च भक्तौ लब्धम् । अत एव "ज्ञात्वा देवं सर्वपाशापहानिः" इति प्रमाणाज्ज्ञाताज्ञातपापादिपाशनिवर्तकज्ञानादप्याधिक्यमभिप्रेत्य भक्त्यैवात्रोपसंहारः कृत इत्यास्तां विस्तरः ॥ ६ ॥

इति श्रीनारायणतीर्थविरचितायां भक्तिचन्द्रिकायां
द्वितीयाध्यायस्य द्वितीयाह्निकम् ॥
समाप्तश्च द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

## प्रथमाह्निकम् ।

भजनीयस्य पूर्णत्वं समर्थयितुं सर्वस्य भजनीयस्वरूपतामाह—

**भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात्॥१॥**

भजनीयेनेति । भजनीयेन-परमेश्वरेण, अद्वितीयम्—अभिन्नम्, इदं—सेव्यसेवकसेवातत्साधनगुरुमन्त्रादिकम् । कुतः? कृत्स्नस्य तत्स्वरूपत्वात्—सर्वस्यापि पदार्थस्य तद्विवर्तत्वेन तदात्मकत्वात् । पूर्वरूपापरित्यागेनोत्तरावस्थारूपस्य विवर्तस्य घटादेरिव स्वकारणतः पृथगसत्वात् । सत्वहीनस्यालीकत्वात् । तस्य केवलं सत्वे सत्वस्य च विषयिज्ञानरूपत्वात् । ज्ञानस्य च लाघवादेकस्य स्वप्रकाशब्रह्मरूपत्वादस्तिभातिप्रियात्मकमिदं सर्वं नामरूपात्मकम् । नामरूपत्वबाधे ब्रह्मैव । राधेयत्वबाधे कौन्तेय एव यथा कर्णः । अत एव "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं सर्वम्" इत्याद्याः सर्वाभेदम्, "सर्वं तं पराद्योऽन्यत्रात्मनः सर्वं वेद" इत्यादयो जगदर्थिनां पुरुषार्थाद् भ्रंशं च वदन्ति श्रुतयः । अत एव "यो ऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादिश्रुतिनिन्दितद्वैतिभक्तापेक्षया—

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । (भ०गी०७-१९)

इत्यनेनाद्वैतज्ञानिनो भक्तस्यैवोत्कर्षः प्रतिपादितो भगवद्गीतायाम् ।

त्रिविधपरिच्छेदशून्यत्वलक्षणपूर्णत्वादिकमाहात्म्यज्ञानवतस्तस्य

व्यवहृतावपि सर्वस्य तत्स्वरूपतावगमेन ब्रह्मण्येव निरतिशयप्रीतिसंभवादित्यभिप्रेत्यात्राद्वैतमुक्तम् । एतेन अद्वितीयं पारमार्थिकं द्वितीयं न भवति कृत्स्नस्योपादेयतया तत्स्वरूपत्वात् । नह्युपादेयस्याविनाशित्वलक्षणं पारमार्थिकत्वं संभवति, तत्स्वरूपत्वं तु समवायस्थानाभिषिक्तमन्योन्याभावाविरुद्धमभेदाविभागापरपर्यायं तादात्म्यम् । तत्र प्रमाणन्तु "सर्वं खल्विदं ब्रह्म तज्जलान्" इति ।

ततो जगज्जगत्तस्मिन्सदसच्चाखिलं मुने । इति ।

नचाऽत्र बाधायां सामानाधिकरण्यम्, ज्ञेयप्रकरणाऽभावे तादृशसामानाधिकरण्याभ्युपगमस्य निर्मूलत्वात् । बाधायां सामानाधिकरण्येऽपि बाध्यमानस्याभेदस्य सिद्ध्याऽभिमतसिद्धेश्चेति कस्यचिद्व्याख्यानं निरस्तम् । गुण्यादिभावस्थल एव तादृशभेदस्य संभवात् । ब्रह्मप्रपञ्चयोर्ब्रह्मजीवयोर्वा गुणगुण्यादिभावः संभवतीत्यन्यत्र विस्तरः । तस्माच्छुद्धाद्वैतमेव सूत्रकृदभिप्रेतमिति नहि मन्तव्यम् । तदुपपत्तिप्रकारश्चाभिहितोऽभियुक्तैः —

आदित्यादेरभावे विलसति पुरतो यः पदार्थप्रकाशो
दृष्टोऽसौ स्वस्वरूपः सुखमपि नियतं सत्वमेषां स एव ।
आदित्यादेरपीत्थं स च भवति ततः सच्चिदानन्द आत्माऽ-
सत्स्यात्तस्मात्ततोऽन्यज्जगदिति सुधियां दृश्यमाणन्तदेव ॥

प्रेम द्वैतविदां यतोऽस्ति गलितं तत्सत्क्रियाकारका-
पेक्षाणां परमात्मनैक्यविदुषामद्वैतिनां चाऽधिकम् ।
सन्तृप्ताख्यमतो यतो भगवता ज्ञानी ममात्मा महा-
नात्मा दुर्लभ इत्यनारतमयं ब्रह्मात्मवित्स्तूयते ॥

पुमर्थः प्रेमाऽयं विदित इह संतप्तपदतः
स च प्राप्यः खल्वप्रयतनवशेनापि मनुजैः ।
स चायं संसाध्यः सगुणमहिमज्ञानसुलभाद्
निराकाराज्ञानात्कथितमपि धात्रा स्तुतिपदैः ॥

तथाऽपि भूमन् महिमाऽगुणस्य ते
विबोद्धुमर्हत्यमलान्तराऽऽत्मभिः ।
अविक्रियात्स्वानुभवादरूपतो
ह्यनन्यबोध्यात्मतया न चान्यथा ॥ इति ॥

अस्याऽर्थः । भो भूमन्–सर्वबाधाऽवधित्वाऽऽदिरूपैश्वर्यशालिन् । अगुणस्य-निखिलगुणातीतस्याखण्डवीर्यरूपस्य ते, महिमा-स्वरूपं सत्यज्ञानानन्ताऽऽनन्दैकरसरूपम्, अमलान्तरात्मभिः-विशुद्धाऽन्तःकरणैः, विबोद्धुं-साक्षात्कर्तुं योग्यो भवति, कस्मात् स्वानुभवात्-तत्वमस्यादिवाक्यजन्याखण्डाकाराऽन्तःकरणवृत्तेः । नन्वन्तःकरणस्य कथं निराकाराकारिवृत्तिस्तत्राऽऽह–अविक्रियादिति । न विद्यते क्रियाविशेषाकारः संस्थानविशेषो यस्य तादृशादित्यर्थः । तथाच न सर्वत्र मूषानिषिक्तद्रुतताम्रादिवत्संस्थानविशेषत्वमाकारत्वम्, निराकाररूपघटत्वादिवृत्तावव्याप्तेः । किन्त्वावरणनिवर्त्तनयोग्यम्, तद्योग्यत्वं च तज्जनकतावच्छेदकीभूतधर्मत्वम्, स च धर्मोऽण्डोपाधिः । स चाखण्डाकारवृत्तावस्त्येवेत्युपपद्यते ब्रह्माकाराकारित्वमपि वृत्तेरिति भावः । अविक्रियत्वमेव कुतस्तत्राह–अरूपत इति । रूप्यते साक्षिणा विषयीक्रियत इति रूपम्, तन्न विद्यते यत्र तादृशाद् दृश्यातीतस्वरूपादिति यावत् । दृश्यातीते विशेषाऽसंभव

इति भावः । दृश्यातीतत्वं कुतस्तत्राऽऽह—अनन्येति । स्वप्रकाश-संविद्रूपत्वादित्यर्थः । दृश्यवत्त्वेन तादृक्त्वमित्याह—न चेति । अत्र भक्तिप्रस्तावेऽमलान्तरात्मभिरित्यनेन निर्गुणमहिमज्ञानस्योत्तमाधिकारिलभ्यत्वकथनेन भक्तिं प्रत्यन्तरङ्गसाधनत्वं लब्धम् । युक्तश्चैतत् । महिमज्ञानं विना स्थायिभावस्याऽसम्भवात् । अतो ज्ञानस्य भक्तिप्रतिबन्धकत्ववर्णनं केषांचिदाग्रहमात्रमिति मन्तव्यम् ॥ १ ॥

द्वैतन्तु भासमानं तत्स्वरूपतच्छक्तिकृतम् । सा च ततो भिन्नाभिन्नत्वादिनानिर्वाच्यत्वान्मायाप्रकृतिश्च भवति । गुणत्रयात्मिकायाः प्रकाशवृत्त्यावरणैर्धर्मैर्जडेष्वनुगतिदर्शनादित्यभिप्रायवानाह—

## तच्छक्तिर्माया जडसामान्यात् ॥ २ ॥

तच्छक्तिरिति । "देवाऽऽत्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेः,

दैवी ह्येषा गुणमयी मम माया दुरत्यया । (भ० गी० ७–१४)

इत्यादिभगवद्वाक्यैश्च तच्छक्तिः–मायाऽऽख्या सर्वस्य कारणमित्यर्थः । कुतः? जडसामान्यात्–जडेषु दृश्यमात्रेषु कारणतयाऽन्वयादित्यर्थः । कार्याणां सामान्यमनुगतं कारणमेवेति भावः । अथवा—कार्यानुकूला तच्छक्तिर्मायापि बाधायामभेदवती, कुतः? जडत्वादित्यर्थः । जडानां बाधायामेव सामानाधिकरण्यव्युत्पादनादितिभावः ॥ २ ॥

तस्य भजनीयस्य शक्तिर्ज्ञानादिकमपि श्रूयते "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुत्या, तत्कथं मायैवोक्ता, तत्राऽऽह—

व्यापकत्वाद्व्याप्यानाम् ॥ ३ ॥

व्यापकत्वादिति । व्याप्यानां—कार्यतया स्वापेक्षया न्यूनकालस्थितिकानां वियदादीनामपेक्षया व्यापकत्वात् शक्तेरितिशेषः । कार्यानुयोगिकतादात्म्यसम्बन्धप्रतियोगित्वादिति यावत् । ब्रह्मणोऽपि कार्यापेक्षिकं तादृशव्यापकत्वं तत एव संभवतीति सैवोक्तेति भावः ॥३॥

नन्वदृष्टद्वारा जीवज्ञानेच्छाकृतिभ्य संसारोऽस्तु, अलं भगवन्मायया, तत्राह—

न प्राणबुद्धिभ्योऽसंभवात् ॥४॥

नेति । प्राणबुद्धिभ्यः—अदृष्टद्वारा जीवज्ञानादिभ्यो न संभवति, कुतः ? असंभवात् । सर्वत्र कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे विषयतया जीवज्ञानादीनामसंभवात् । सूक्ष्मार्थाद् द्रष्टृत्वाज्जीवस्येति भावः ॥ ४ ॥

न केवलं शक्तिरेव कारणम्, अपि तु शक्तिमत्त्वेन स्वयमेव सर्वं करोति, शक्तिस्तु कारणतावच्छेदिकैवेत्यभिप्रायवानाह—

निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत् ॥ ५ ॥

निर्मायेति । उच्चावचं—न्यूनाधिकं दृश्यजातम्, निर्माय—विरच्य, प्राणिहितकाम्यया । श्रुतीश्च-वेदांश्च, निर्मिमीते—रचयति, चकारात् इतिहासाऽऽदीन् । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इतिहासः पुराणम्" 'तस्मै वेदान्पुरा-

णानि दत्तवानग्रजन्मने' इत्यादिश्रुतिस्मृतिवाक्यात् । व्यासस्य तु विभज्य संक्षेपकत्वमात्रमेव । मात्स्ये—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरन्तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवासीच्छतकोटिप्रविस्तरम् । इत्यारभ्य—
तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशतः ॥

इत्यन्तेन ग्रन्थेन तथा प्रतिपादनात् । पितृवदिति । यथा पिता पुत्रानुत्पाद्य हिताऽहितप्राप्तिपरिहारवाक्यमभिधत्ते तद्वदित्यर्थः । अत्रानेन दृष्टान्तेन निमित्तत्वमभेदकथनेनोपादानत्वं ब्रह्मणः प्राप्तम्, तेन ब्रह्म जगदभिन्ननिमित्तोपादानमिति भावः । अत्र सूत्रकृता 'निर्मायोच्चावचम्' इति जगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं 'श्रुतीश्च निर्मिमीते' इति वेदकारणत्वेन परमेश्वरस्य दृढीकृतम् । ननु न तावद्वेदकर्तृत्वेन तस्य तत्संभवति, वेदस्य पौरुषेयत्वापातात् । नाऽपि वेदोपादानत्वेन, कार्योपादानयोरेकशक्तिमत्त्वानियमस्य मृत्पिण्डघटादिब्रह्मतत्कार्यान्तरेषु च व्यभिचारदर्शनेनाप्रामाणिकतया वेदस्य सर्वार्थप्रकाशनसामर्थ्यमात्रेण ब्रह्मणि तदसिद्धेः । तत्सिद्धौ वा वेदः स्वयमज्ञ एव जीवानां सर्वाऽर्थगोचरप्रकाशजनक इति ब्रह्मणोऽप्यज्ञस्यैव प्रकाशकत्वापत्तेश्च । एवमपि ब्रह्मणो वेदाविषयनदीवालुकासङ्ख्यप्रकाशजनकत्वालाभाच्चेति । मैवम् । कर्तृत्वमिह नार्थमुपलभ्य रचयितृत्वम् । येन वेदस्य सापेक्षत्वलक्षणं पौरुषेयत्वमापद्येत । नाप्युच्चारयितृत्वम्, अध्यापकसाधारण्येन तावता वेदे ब्रह्मकर्तृत्वविशेषासिद्धेः । सर्ववेदोच्चारणेन महोपाध्यायतामात्रं हि तदा ब्रह्मणः स्यात् । नापि पूर्वक्रमा-

नपेक्षया स्वतन्त्रक्रमेणोच्चारयितृत्वम् । क्रमान्यत्वे वाग्वज्रत्वेन दुरितप्रसङ्गात् । किन्तु ब्रह्म स्वतन्त्रमप्यध्येतृणां पुरुषार्थसिद्धये नियतक्रमस्वराद्यपेक्षमाणं पूर्वकल्पेषु स्वकृतेनैव नियतेन क्रमादिना विशिष्टान्वर्णान्करोति । सर्गादौ भगवान् 'धाता यथापूर्वमकल्पयत्' इति स्मृतेः । एतदेवाऽध्यापकविलक्षणं ब्रह्मणो वेदकर्तृत्वम् । यदन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव क्रमेण विशिष्टेषु वैदिकवर्णेषु कर्तृत्वम् । तथाचातीतानन्तकल्पस्थवैदिककर्मस्वरादिप्रतिसन्धानमनन्तवैदिकवर्णपदवाक्यप्रतिसन्धानं च ब्रह्मणो वक्तव्यम् । अन्यथा तत्कर्तृत्वाऽयोगात् । तस्य सकलस्य प्रतिसन्धानं च ब्रह्मणो न मानान्तरात्, तस्याऽन्तःकरणाद्यभावेन मानान्तराप्रवृत्तेः । किन्त्वनावृतरूपचैतन्यबलादितिसंकोचकाभावाद्यावत्स्वसृष्टप्रकाशवत्सर्वज्ञं ब्रह्म सिध्यतीत्यास्तां विस्तरः ॥ ५ ॥

ननु कथं पितृवद्धितः, अनिष्टसाधनहिंसादिनिषिद्धमिश्रकर्मोपदेष्टृत्वादित्याशङ्क्य नाऽनिष्टमुद्दिश्योपदिशति, किन्तु तदभिलषितविशिष्टसुखमुद्दिश्य । तत्साधनन्तु तादृशङ्कर्म नान्तरीयकानिष्टजनककर्मघटितमपि भवत्येव, शुभकर्मण इष्टजननस्वभावत्वात् । अतस्तादृशं कर्म ज्योतिष्टोमादिकमुपदिशन्नीश्वरः पितृवद्धित एवेत्यभिप्रायेण समाधत्ते—

## मिश्रोपदेशान्नेति चेन्न स्वल्पत्वात् ॥ ६ ॥

मिश्रेति । पापसाधनहिंसादिमिश्रितकर्मोपदेशान्न हित इति न शङ्क्यम् । कुतः स्वल्पत्वात् । शुभफलकप्रधानकर्मापेक्षयाङ्गहिंसाया

अल्पानिष्टफलत्वादित्यर्थः। अत एवाह पञ्चशिखाचार्योऽपि 'स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्श' इति। ननु "अग्नीषोमीयं पशुमालभेत" इति साक्षाद्वेदे विहितहिंसायाः कथमधर्मसाधनत्वमुच्यते, धर्माधर्मयोर्वेदैकसमधिगम्यत्वादितिचेत्। मन्त्रार्थवादपुराणेभ्योऽनर्थसाधनत्वाऽवगमादित्यवेहि। तथा हि मन्त्रो "यत्पशुर्मायुमकृतोरो वापद्भिराहत अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः" इति संज्ञपनादेनो दर्शयति। एवं भगवद्गीताऽऽदौ—

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप (अ० ४ श्लो० ३३) इत्यादिना हिंसायोगेन विधियज्ञस्य निन्दा ज्ञाप्यते। केचित्त्वस्य सूत्रस्यान्यादृशमभिप्रायं वर्णयन्ति। तथाहि। निषिद्धहिंसादिमिश्रितोपदेशात्पितृतुल्यो नेति न, कुतः तस्योपदेशस्य स्वल्पविषयत्वात्। तथा च हिंसाविधेर्निरवकाशतया निषेधरूपस्य सावकाशतया सामान्यं हिंसानिषेधं प्रत्यपवादकत्वमेवेति भावः। यत्तु क्रत्वर्थहिंसायां क्रतूपकारकत्वपुरुपापकारकत्वयोर्द्वयोरप्यविरोध इति। तन्न। 'त्याज्यं दोषवदित्येके' (भ० गी० १८-३) इत्यादिमतभेदमुपन्यस्य भगवता—

त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः।
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ (भ०गी० १८-५)

इति प्रकाराऽन्तरेण त्यागप्रतिज्ञया पूर्वमतदूषणात्, 'तस्माद्यज्ञे वधोऽवधः' इत्यादिवाक्याच्च। एवं च विधेः पापजनकत्वमप्यर्थ इति विशेषविधिसामान्यनिषेधरूपतयैव विरोधपरिहारः। यत्तु भारतादौ हिंसा-

युक्तयज्ञनिन्दास्मरणम्, तत्वहिंसायुक्तकर्मस्तुत्यर्थम् । 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तर्हि स्तुत्यं स्तोतुम्' इति न्यायात् । अपि चाऽङ्गविधिपर्यालोचनायां नास्ति यद्यपि विरोधस्तथाऽपि ज्योतिष्टोमविधिः साङ्गं प्रधानं पुरुषस्य विदधत्पुरुषार्थहिंसानिषेधमग्नीषोमीयहिंसायामवतरन् निरुणद्धि, नह्यग्नीषोमीयहिंसां वर्जयित्वा ज्योतिष्टोमः शक्यतेऽनुष्ठातुम् । तत्र च निषेधप्रवृत्तौ प्रधानविधिरेव बाध्येत, निषिद्धाङ्गेन प्रधानेन फलजननेऽनिष्टस्यावश्यपतनीयत्वेन तस्यैवानिष्टसाधनत्वलाभात् । न शुद्धमपि प्रधानं केवलं कारणम्, साऽङ्गस्यैव फलसाधनत्वश्रवणात् । तस्मादस्ति विरोध इति सामान्यबाधोऽतो हिंसाया अदुष्टत्वमेवेति । तच्चिन्त्यम् । हिंसानिषेधशास्त्रेण हिंसामात्रस्यानर्थसाधनत्वावगतावपि वैधहिंसायां क्रतूपकारकत्वस्य तद्घटितप्रधाने च स्वर्गादिफलसाधनत्वस्यावगतौ बाधकाभावात् । न ह्यनर्थसाधनत्वावगतौ प्रधानस्य प्रवर्तनाविषयत्वं विरुध्यते । येन प्रवर्तना स्वविषयस्यानिष्टसाधनत्वमाक्षिप्येत । बलवद्द्वेषाभावदशायां स्वर्गादौ रागौत्कट्यमात्रेण प्रवृत्त्युपपत्तेः । अत एव लौकिकहिंसाद्यनेकानर्थेऽपि तज्जन्यानर्थे बलवद्द्वेषाभावदशायां तात्कालिकेष्टे रागौत्कट्यमात्रेण दृश्यते प्रवृत्तिः । तस्मात् "न हिंस्यात्" इति निषेधशास्त्रं हिंसाविधायकविशेषशास्त्रेण न बाध्यत इत्यास्तां विस्तरः ॥ ६ ॥

यतः पितृवत्सर्वान्निर्मिमीते, उपदिशति च भगवान्, अत एव शुभाशुभे फले प्रसादरोषाभ्यां स एव ददाति । पापपुण्ये तु तस्य प्रसादकोपौ प्रत्येव हेतू न फलं प्रतीत्याशयवानाह—

## फलमस्मादिति बादरायणो दृष्टत्वात् ॥७॥

फलमिति। विहितनिषिद्धफलम्, अस्मात्-परमेश्वरात्तुष्टाद्रुष्टाच्च, बादरायणो मन्यते वेदान्तशास्त्रे 'फलमत उपपत्तेः' (अ० ३-२-३७) इत्यादिसूत्रैः। कुतः ? दृष्टत्वात्-राजादितोषरोषाभ्यामिष्टानिष्टफलयोर्दृष्टत्वात्। तथा च दृष्टानुसारेण "स वा एष महानज आत्मा अन्नादो वसुदानः परमात्मा मे शुध्यताम्" 'क्षमस्व परमेश्वर' इत्यादिवाक्यस्वरससूचिततया सिद्धावसिद्धौ तोषरोषावेव कर्मणां व्यापारौ, न तु पदार्थविशेषौ धर्माधर्मरूपौ द्वारभूतौ कल्पनीयौ, गौरवात्। देवतान्तरप्रीतेस्तु व्यभिचारादननुगमाच्च (न) तद्द्वारत्वम्। तोषरोषौ च रागद्वेषरूपतया सविषयाविति विषयतासम्बन्धेन जीवनिष्ठौ फलहेतू। यथा च रागद्वेषवत्त्वेऽपि न वैषम्याद्यापत्तिस्तथोक्तं कारुण्यसूत्रे। ननु जीवनिष्ठौ गुणविशेषरूपौ धर्माधर्मावेवेश्वराख्ययुक्त्यन्तराकल्पनलाघवात् फलहेतू, "पापः पापेन कर्मणा भवति पुण्यः पुण्येन" इत्यादिश्रुतेश्च। ननु जडात्कर्मणः केवलात्कथं फलसिद्धिरिति चेत्, भ्रान्तोऽसि। वाचनिकेऽर्थे कथमिति शङ्काऽनुदयात्। ननु तथापि प्रवर्तकं विना कथं कर्मणः प्रवृत्तिः स्यादिति चेत्। प्राक्तनसंस्कारादित्यवेहि। पयोऽम्बुप्रभृतिप्रवृत्तावदृष्टस्यैव कारणत्वदर्शनात्, ईश्वरप्रवर्तकत्वपक्षेऽपि वैषम्याद्यापत्तिवारणाय संस्कारहेतुताया आवश्यकत्वेन तस्यान्यथासिद्धेरुक्तत्वात्। अत एवोक्तं श्रीभागवते—

कर्मणा जायते जन्तुः कर्मणैव हि लीयते।
सुखदुःखं भयक्षेमं कर्मणैवाऽभिपद्यते ॥

अस्ति चेदीश्वरः कर्ता फलरूप्यन्यकर्मणाम् ।
कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥
किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ।
अनीशेनान्यथा कर्तुं स्वभावमनुवर्तते ॥
स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ (स्कं १०,२४,१३-१६)

इति चेत् । अत्र वदन्ति । जीवफलं प्रति न कर्मणां करणत्वम्, प्राचीनशुभवासनाभिर्जन्मप्रयाणयोरन्तराले धर्ममनुतिष्ठतां युधिष्ठिरादीनामसुखदर्शनात्, तथा पापमनुतिष्ठतां दुर्योधनादीनान्त्वदुःखदर्शनाद्व्यभिचारात्प्राक्तनकर्मभिस्तथा फलमिति चेत्, भ्रान्तोऽसि । तथा सति तेषां तद्विपाकानुगुणानामेव वासनानामभिव्यक्त्यापत्तेः । न चैवमभवत् । अत ईश्वर एव स्वतन्त्रः स्वेच्छया विचित्रार्थानां हेतुः । लोकेऽपि राजादीच्छया मान्यसेवकानामपि फलवैषम्यदर्शनात् । ननु लोकवदेव वैषम्यनैर्घृण्ये स्याताम् । न स्याताम् । ईश्वरस्य शक्तिमत्त्वेनैव कारणतया कारणतावच्छेदकाऽनन्तशक्तिकृतत्वेन तयोरीश्वरेऽप्रसक्तेः । मुख्यशक्तीनां नित्यत्वेऽपीच्छावृत्तिरूपावस्थाशक्तयोऽनित्या एवेति न सुखदुःखादेः प्रतिजीवं प्रतिक्षणं च व्यवस्थाया अप्यनुपपत्तिः । न चेदं गौरवं दोषाय, प्रामाणिकत्वात् । एतेन ताः शक्तयः शक्तिमतोऽभिन्ना भिन्ना वा । आद्ये कथं शक्तिवैजात्यम् । अन्त्ये ताः कारणतावच्छेदिका उत कारणानि । आद्ये कार्यवैचित्र्याद्यनुपपत्तिः, कारणभेदस्यैव कार्यभेदप्रयोजकत्वात् । अन्त्ये नैककारणकत्वं कार्यजातस्य स्यात् ब्रह्मणोऽन्यथासिद्धिश्च स्यात् । न च तद्द्वारम् । तथा च द्वारेण द्वारिणो नान्यथासिद्धिरिति वाच्यम् । तथा

सत्येकस्यैकदा स्वाधीनविरुद्धानेकद्वारकत्वे युगपत्सर्वाणि कार्याण्यापद्येरन्, स्वभावस्याऽनतिक्रमणीयत्वादिति परास्तम्। अनिर्वचनीयख्यातिपक्षे विभिन्नसत्ताकयोर्भेदाभेदयोरङ्गीकारेण दोषाभावात्। वस्तुतो वैषम्यादावपीष्टापत्तिः। न च जीवसाम्यम्। स्वातन्त्र्यपारतन्त्र्याभ्यां विशेषात्। न ह्यस्मदादिवद्वैषम्यमनुतिष्ठतोऽपि राज्ञो राजत्वहानिः संभाव्यते। न च कर्मवैयर्थ्यम्, मर्यादामात्रार्थत्वात्। परमेश्वरस्य रोषतोषौ प्रति वा कारणत्वात्। एतत्सर्वमभिप्रेत्यैव वनपर्वणि युधिष्ठिरं प्रति द्रौपदी प्राह—

धातैव खलु भूतानां सुखदुःखे प्रियाऽप्रिये।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन्॥
यथा दारुमयी योषा नरधीरसमाहता।
चेष्टयत्यङ्गकर्माणि तथा राजन्निमाः प्रजाः॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च॥
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम्।
येन कारयते कर्म शुभाशुभफलं विदुः॥
अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च।
अन्यथैव प्रभुस्तानि करोति विकरोति च॥
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः।
अयसा वाऽप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम्॥
एवं स भगवान्देवः स्वयंभूः प्रपितामहः।
हिनस्ति भूतैर्भूतानि छद्मं कृत्वा युधिष्ठिर॥

संप्रयोज्य वियोज्याऽयं कामकारकरः प्रभुः ।
क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ॥
न मातृपितृवद्राजन् धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ॥
आर्याञ्छीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्षितान् ।
अनार्यान्सुखिनश्चैव(अ)विह्वला(न्द्रव्य)चिन्तया ॥
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हयेयार्थविषमं योऽनुपश्यति ॥
अनार्यशास्त्रातिक्रूरे लुब्धे धर्मापवादिनि ।
धार्तराष्ट्रे श्रियं दृष्ट्वा धाता किं फलमश्नुते ॥
कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥
अथ कर्म कृतं यच्च न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्छोचामि दुर्बलान् ॥ इति ।

न च तर्हि तत्र युधिष्ठिरस्य फलं प्रति कर्मणां कारणत्वप्रतिपादनं विरुध्येतेति वाच्यम् । उक्ताभिप्रायेण तस्य तथात्वोक्तेः । तथा हि तत्र

अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ॥
धर्मं चरामि सुश्रोणि न कर्म फलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥

इत्युपक्रम्य

धर्म एव प्लवो नाऽन्यः स्वर्गं द्रौपदि गच्छताम् ।
स वै नौः सागरस्येव वणिजः पारमिच्छतः ॥
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्यायशीलता ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥
नाचरिष्यन्परे धर्मं परैः परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥
दृश्यन्ते ह्यपि विद्यानां फलानि तपसस्तथा ।
कृशाशाः सुव्यवायाश्च तपसा दग्धकिल्बिषाः ॥
प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।

इत्यादिना धर्मस्यावश्यकर्तव्यत्वज्ञापनायाविगीतशिष्टाचारविषयत्वेनैव सफलत्वं साधितम् । वस्तुतस्तु सर्वस्यापीश्वराधीनत्वमेवेत्यभिप्रेत्य—

यस्य प्रसादात्संभूतो मर्त्यो गच्छत्यमर्त्यताम् ।

इत्युक्तमिति संक्षेपः ॥ ७ ॥

अस्मादुत्पन्नस्य कुत्र कथं वा लय इत्याशङ्कायामाह—

## व्युत्क्रमादप्ययस्तथा हि दृष्टम् ॥ ८ ॥

व्युत्क्रमादिति । फलमस्मादित्यतोऽस्मच्छब्दो विभक्तिविपरिणामेनानुवर्ततेऽस्मिन्निति-ईश्वर एव, व्याप्यस्य पृथिव्यादेर्व्यापके जलाऽदौ लय इति क्रमेण जीवतत्वानां लयः, हि-यतः, तथा दृष्टं-कारणे कार्यस्य लयो दृष्टः, अत एव—

पृथिव्यामथ लीनायामप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चाऽनिले ॥
वायौ चाकाशसंलीन आकाशे च मनोऽनुगे ।
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते ॥
अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।

इति भारते ( उक्तम् )

ज्योतिर्भूते–एकीभूत इत्यर्थः । सर्वगते–परमेश्वर इत्यर्थः । विस्तरस्तु 'विपर्ययेण क्रमोऽत उपपद्यते च' ( २-३-१४ ) इति वेदान्तसूत्रव्याख्यास्ववसेयः ॥ ८ ॥

इति नारायणतीर्थकृतायां शाण्डिल्यसूत्रवृत्तौ तृतीयाध्यायस्य प्रथमाह्निकम् ।



# तृतीयाध्याये

## द्वितीयाह्निकम् ।

भगवद्भावरूपो मोक्षोऽत्यन्तैक्ये संभवति न नानात्व इत्यभिप्रेत्योक्तमैक्यं द्रढयति—

**तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत् ॥ १ ॥**

तदैक्यमिति । तस्य-भजनीयस्य भक्तैरैक्यं-वास्तवम्, "तत्त्वमसि" "अहं ब्रह्माऽस्मि" "तत्त्वमेव त्वमेव तत्" "तद्ब्रह्माऽद्वयमस्म्यहम्" इत्यादिश्रुतेः । नानात्वं-भेदः, उपाधेः—मायाऽऽदेर्योगात्, एकत्वं-भेदनाशश्चोपाधिहानादादित्यस्येव

सोऽयं जीवसमाख्यस्तु ब्रह्मैव परमार्थतः ।
व्यवहारदशायान्तु मायया परमेश्वरः ॥
पृथक्त्वेन द्विजा भाति जलपात्रैर्यथा रविः ।

यथैकमाकाशमहाऽर्कबिम्बं
क्षुद्रेषु पात्रेषु जलाऽन्वितेषु ।
भजत्यनेकप्रतिबिम्बभावं
तथात्वमन्तःकरणेषु देवः ॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादि प्रमाणादिति भावः । एतेन समुद्रनद्यादिदृष्टान्तघटितवाक्यानुसारात् "तत्त्वमसि" इतिवाक्यानामुक्ताविभागपरत्वम् । "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्यानां लयात्मकाविभागपरत्वम् । भेदनाशकवाक्यानां लयात्मकाविभागविरुद्धविभागनाशपरत्वमिति निरस्तम् । विभागनाशादेरपुरुषार्थत्वाद् दुःखाभावविशिष्टस्वरूपस्यैव त्वन्मते पुरुषार्थत्वौचित्यात् । मन्मते तु ब्रह्मैव पुरुषार्थस्तत्र विशेषणीभूतो भेदनाशः । किञ्चाविभागपक्षे प्रतिबिम्बदृष्टान्तानुपपत्तिः, तेन ह्यन्योन्याभावसम्बन्धतन्नाशावेव स्वरसतो लभ्येते । किञ्च प्रबलतरबाधकाभावे सामानाधिकरण्यप्रतिपाद्यस्वरूपैकत्यागोऽनुचितः, 'भेद एव विभग्नः' "भेदमसन्तं कः करिष्यति" इत्यादावन्योन्याभावरूपमुख्यार्थत्यागश्चान्याय्यः । एवं ब्रह्मैव भवतीत्यत्र भेदनाशावच्छिन्नस्वरूपैक्यमर्थ एवकारानुरोधात् । एकात्मव्यक्तौ लाघवाच्च ब्रह्माभेदो जीवस्य । समुद्रनद्यादिघटितदृष्टान्तवाक्ये तु विभागनाश एवार्थो न त्वविभागरूपधर्म्मान्तरोदयः । न ह्येतावता भेदनाशाभावः सिद्ध्यति, द्वयोरपि नाशयोरविरोधादित्याद्यन्यत्र विस्तरः ॥ १ ॥

ननु सर्वज्ञान्तर्यामित्वाद्युपपत्तिलिङ्गात्, "द्वा सुपर्णा" इत्यादिवेदश्रुतेश्च भेद एव परमेश्वरस्य जीवादित्याशङ्क्य प्रतिषेधति—

## पृथगितिचेन्न परेणासम्बन्धात्प्रकाशानाम् ॥ २ ॥

पृथगितिचेन्नेति । ब्रह्म जीवेभ्यः पृथक् सर्वज्ञत्वादिहेतुभिरितिचेत्—एवं यदि, तन्न, कुतः परेण—ब्रह्मणा, प्रकाशानाम्—चेतनानां

जीवानाम्, असम्बन्धात्—भेदोपपादकपारमार्थिकसम्बन्धाभावात्। भेदेन मिलितयोर्घटभूतलयोरिव जातिव्यक्त्यादेरिव वा संयोगः समवायस्तादात्म्यं वा सम्बन्ध आपद्येत। न च सोऽस्ति मानाऽभावाद् दुर्वचत्वाच्च। तस्मादभेद एव, भेदस्तु काल्पनिक इति भावः ॥ २ ॥

कथं विकारिणां जीवानां ब्रह्मणाऽभेद इत्याह—

## न विकारिणस्तु करणविकारात् ॥३॥

न विकारिण इति। प्रकाशजीवाः ज्ञानसुखदुःखाऽऽदिविकारवन्तो न भवन्ति। कुतः? करणविकारात्-अन्तःकरणस्यैव सकलतादृशपरिणामाऽभ्युपगमात्। कामःसङ्कल्पाऽऽदीन् प्रकृत्य "एतत्सर्वं मन एव" इत्यादिश्रुतेरन्वयव्यतिरेकाभ्यां कारणत्वेन गृहीतस्य मनस एव तत्परिणामित्वकल्पनौचित्याच्च। जीवानामन्तःकरणसम्बन्धादेव सुखाऽऽदिकम्। तदेवं विवर्ताऽधिष्ठानत्वमेव तेषाम्। इदन्तु बोध्यम्। एकस्या एवाऽन्तःकरणवृत्तेरन्तःकरणपरिणामरूपत्वम्, जीवं प्रति विवर्तरूपत्वं चेति संक्षेपः ॥ ३ ॥

ननु यदि स्फटिकवत्स्वच्छस्याप्युपाधिबलादनर्थस्तदा कथं मोक्षस्तत्राह—

## अनन्यभक्त्या तद्बुद्धिलयादत्यन्तम् ॥ ४ ॥

अनन्येति। अनन्यभक्त्या-केवलनिष्कामब्रह्मभक्त्या, तस्य-जीवस्य, बुद्धेः-अन्तःकरणस्यात्यन्तं लयात्-निरन्वयनाशाद् ब्र-

ह्माऽऽनन्दाऽवाप्तिरूपा मुक्तिर्भवतीत्यर्थः । ननु स्वरूपसम्बन्धरूप-ब्रह्माऽवाप्तेः स्वत एव सिद्धत्वात्कथं तदुद्देशेन प्रवृत्त्यादिरिति चेन्न । उपाधिलयविशिष्टरूपेणोद्देश्यतया तत्संभवादित्याद्यन्यत्र विस्तरः, सूत्रे 'अत्यन्तम्' इत्यनेनेदं सूचितम् ।

यदा तमस्तत्र दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः ॥

"नासदासीन्नो सदासीत्" "तम आसीत्" इत्यादिश्रुतिभिः प्रलयाऽऽदावभावप्रतिपादनात् । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिभिः सृष्ट्यादावुत्पत्तिवर्णनाच्चान्तः-करणस्य प्रलयादावतीतावस्थाख्यनिवृत्तिसत्त्वेऽपि तदवस्थस्यान्तः-करणस्य सत्ताङ्गीक्रियत एव, अन्यथा पुनः संसारानापत्तेः । 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' (२-३-३०) 'स एव तु कर्मानुस्मृतिविधिभ्यः' (३-२-९) इति शारीरकमी-मांसासूत्रविरोधाच्चेति दिक् ॥ ४ ॥

अनन्यभक्तस्य मोक्षे कियान्विलम्बस्तत्राऽऽह—

## आयुश्चिरमितरेषान्तु हानिरनास्पदत्वात् ॥५॥

आयुश्चिरमिति । अनन्यभक्तस्य जीवन्मुक्त्यवस्थान्यथानुप-पत्त्या आयुः-जीवनादृष्टं चिरमास्ते । उपलक्षणमिदं विपाकत्रया-रम्भोपहितादृष्टानाम् । इतरेषां—सञ्चितानागतानान्तु, हानिः—अश्ले-षविनाशौ, तत्रानागतस्याश्लेषः संचितस्य विनाशः । कुतः, अनास्पदत्वात्—आस्पदं फलरूपलक्षणम्, तद्रहितत्वादित्यर्थः । तथा-

चानिर्मोक्षापत्त्या तत्फलानुत्पत्त्यभ्युपगमेनोत्तरादृष्टानुदयस्येव निष्फलपूर्वादृष्टनाशस्यापि भक्तिबीजप्राथमिकज्ञानव्यक्त्यभावरूपनिमित्तनाशवशात्संभव इति भावः। एतदभिप्रायेणैव भगवान् बादरायणोऽपि 'तदधिगम उत्तरपूर्वाऽघयोरश्लेषविनाशौ तद्व्यपदेशात्' (वे० सू० ४-१-१३) इति। अश्लेषविनाशौ स्वसमानाधिकरणफलाजनकत्वम्। अन्यथा "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इत्यनेन ग्रहणानुपपत्तेः। स्वरूपतो नष्टस्यान्येन ग्रहणानुपपत्तेः। प्रारब्धन्तु स्वसमानाधिकरणफलजनकत्वान्न नष्टमित्युच्यते शास्त्रकृद्भिः।

'ज्ञानाग्निःसर्वकर्माणि भस्मसात्कुरुते' (भ० गी० ४-३७) इत्यादौ सर्वकर्मपदन्तु प्रारब्धेतरार्जुनकर्मपरम्। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" 'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते' (वे० सू० ४-१-१९) इत्यादिश्रुतिसूत्रैकवाक्यतानुसारात्। तथा च प्रारब्धाऽपरिसमाप्तिरेव भक्तस्य कैवल्ये विलम्बो नान्यः।

धर्माऽर्थकामैः किन्तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः परे स्थिता॥

इत्यादिवाक्यैर्भक्तस्य मोक्षातिशयादित्यास्तां विस्तरः॥ ५॥

ननु मोक्षहेतुर्भक्तिश्चेत्संसृतिहेतुरभक्तिरप्यस्त्वित्यत्रेष्टापत्तिमाह—

## संसृतिरेषामभक्तेः स्यान्नाज्ञानात्कारणत्वासिद्धेः॥ ६॥

संसृतिरेषामिति। एषां—जीवानाम्, अभक्तेरपि संसारो नाज्ञानमात्रात् केवलस्य करणत्वासिद्धेः। "इन्द्रो मायाभिः पुरुरूप ईयते"

त्रिभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः॥
अज्ञानकल्पितं विश्वं ज्ञानेनैव विलीयते।
तथाप्यविद्याभेदेन भिन्नं पश्यामहे जगत्॥

इत्यादिवाक्यानामिव

तावदार्तिस्तृषा शान्ता तावन्मोहस्तथा सुखम्।
यावन्नायाति शरणं त्वामशेषाऽघनाशनम्॥
युञ्जानानामभक्तानां प्राणाऽऽयामाऽऽदिभिर्नरः।
अक्षीणवासनं राजन् दृश्यते क्वचिदुत्थितम्॥

इत्यादिवाक्यानामपि सत्त्वात्। यत्त्वज्ञानान्न कुत्राऽप्यर्थसृष्टिदृष्टेति कथमिदमिति तन्न। अभक्तेरप्यर्थसृष्टेरदर्शनात्। वस्तुतस्तु दृष्टैव शुक्तिरजताऽऽदिसृष्टिः स्वप्नसृष्टिश्च। न च तत्राऽन्यथाख्यातिरेव।

यथा हि रज्जुरुरगः शुक्तिका रजतं यथा।
मृगतृष्णा यथाचाम्भः क्लृप्तं विष्णौ जगत्तथा॥

"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" इत्यादिवाक्यविरोधात्। किञ्चाऽरजतं शुक्तिरित्यस्य रजतभिन्ना शुक्तिरिति तावन्नार्थः, तत्पुरुषस्योत्तरपदार्थप्राधान्यस्यौत्सर्गिकस्य त्यागापत्तेः। तस्मादारोपितत्वं नञर्थ इत्यारोपितरजतं शुक्तिरिति वाक्यार्थस्यावश्याभ्युपगन्तव्यत्वादनिर्वचनीयशुक्तिरजतसिद्धिः। न च तत्र रजतावयवादिरूपकारणासंभवा-

दनुपपत्तिः। प्रमाणबलात्सिद्धे कार्ये दोषादेरेव कारणत्वकल्पनात्। अन्यथान्यथाख्यातेरपि क्लृप्तसन्निकर्षादिकारणबाधादनभ्युपगमापत्तेः। इदन्तु बोध्यम्। शुक्तिरजतादिव्यावहारिकरजताद्योः परस्परवैलक्षण्याऽङ्गीकारात्तत्तद्व्यक्तित्वेन कार्यकारणभावाभ्युपगमाद्वा प्रायिकसकलाऽर्थक्रियाव्यवस्थासिद्धिः। या तु क्वचित्समानैवार्थक्रिया, तत्र प्रातिभासिकस्यापि हेतुत्वम्। फलानुसारेणैव कार्यकारणभावकल्पनाया उचितत्वादित्यास्तां विस्तरः॥ ६॥

भक्तिश्च ज्ञानसाध्येत्युक्तम्, ज्ञानसाधनानि च कति, तत्राऽऽह-

**त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदाद्रुद्रवत्॥७॥**

त्रीण्येषामिति। एषां-जीवानाम्, त्रीण्येव नेत्राणि-अर्थप्रमापकानि प्रमाणानि नाऽधिकानि न न्यूनानीत्यर्थः। कानि तानि तत्राऽऽह-शब्दलिङ्गाऽक्षभेदादिति। शब्दाऽनुमानप्रत्यक्षभेदादित्यर्थः। शब्दस्य श्रुतिरूपस्याधिकप्रमाणत्वादादौ, तदनुसारिण एवानुमानस्य प्रमाणत्वात्तदनन्तरम्, अनुमानस्य तर्कशुद्धस्यैव प्रत्यक्षप्रमाणत्वादनुमानाऽनन्तरं प्रत्यक्षनिर्देशः। उपमानादिकन्त्वनुमानादावेवान्तर्भूतमिति भावः। नेत्रत्रयं क्व दृष्टन्तत्राह रुद्रवदिति। यथा रुद्रस्य त्रीण्येव नेत्राणि तद्वदित्यर्थः॥ ७॥

अत्यन्तलयप्रसङ्गात्साऽन्वयनाशमुत्पत्तिं च व्युत्पादयति—

**आविस्तिरोभावविकाशाः स्युः क्रियाफलसंयोगात्॥ ८॥**

आविरिति। जन्यानां पदार्थानामुत्पादकेन पूर्वसत एवाऽऽवि-

र्भावस्तदानीं सत एव ज्ञानाऽतिरिक्तनाशकेन तिरोभावलक्षणो नाशः क्रियते, न तार्किकोक्तौ जनिनाशौ, कुतः ? क्रियाफलं संयोगात्-करोति घटम्, नाशयति घटमित्यादिना धात्वर्थक्रियाफलयोरुत्पत्ति-निवृत्त्योः सम्बन्धप्रतिपादनात् । न हि पूर्वमसतो जायमानधर्मा-न्तरसम्बन्धः क्वापि दृष्टः संभवति वा । तथा चोक्तं भगवता—

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः । (भ० गी० २-१६)

इति । एवं भवति नश्यतीत्यादावपि क्रियाऽऽश्रयत्वं प्रतीयते । तच्च सत एव संभवति । नचाऽऽद्यक्षणसम्बन्धो नाशप्रतियोगित्वं च तदर्थः, आद्यत्वस्याऽनिरुक्तेः । न च स्वाऽधिकरणक्षणवृत्तिप्रागभावप्रतियो-गित्वं तदिति वाच्यम् । अनागतादिकाले घटाद्यभावेन तस्य प्रागभाव-प्रतियोगित्वाऽऽदिधर्मकत्वविरोधात् सदसतोरसम्बन्धात् । प्रति-योगित्वस्य प्रतियोगिस्वरूपत्वे तद्दोषतादवस्थ्यम् । अभावमात्रस्व-रूपत्वे घटाद्यभावोऽपि पटाद्यभावः स्यात् । अभावत्वाविशेषात् । अभा-वेष्वपि स्वरूपतो विशेषाङ्गीकारेऽभावत्वं परिभाषामात्रं स्यात् । न च प्रतियोगी वाऽभावं विशेषयति, असतो विशेषकत्वासंभवात् । तस्मा-त्सत एव कार्यस्य प्रागभावप्रतियोगित्वादयो धर्मा वक्तव्याः । ध्वंसप्रागभावौ चातीतानागतावस्थे एव । ते च वर्तमानावस्थाव-द्भावात्मिके एव । घटोऽतीतो घटो वर्तमानो घटो भविष्यतीति प्रत्ययानां तुल्यरूपतौचित्यात् । नत्वेकस्य भावविषयकत्व-मन्ययोश्चाभावविषयकत्वमित्यस्यौचित्यम्, मानाभावात् । एव-मन्योन्याभावात्यन्ताभावावपि प्रतियोग्यविशिष्टाऽधिकरणस्वरूपावेव लाघवात् ।

नन्वस्मिन्मते वर्तमानावस्थालक्षणाभिव्यक्तिरपि कार्यस्य सती असतो वा। आद्ये कारणव्यापारवैफल्यम्, कारणव्यापारात्प्रागपि कार्यस्याभिव्यक्त्या स्वकार्यजनकत्वापत्तिश्च । अन्त्येऽभिव्यक्तावेव सत्कार्यवादक्षतिरिति चेन्न । अभिव्यक्तेरपि वर्तमानावस्थया प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात्। सर्वकार्याणां च कारणव्यापारात्प्राक् प्रकारभेदेन सदसत्त्वम्, अवस्थानामेव परस्परं परस्पराऽभावरूपत्वमिति तस्या अप्यभिव्यक्तिस्वीकारात्। न चैवमनवस्था गौरवं च, घटसामग्र्या एवाऽऽविर्भावादस्याऽऽविर्भावित्वात्। अन्यथा उत्पत्तेरुत्पत्तावपि तत्प्रसङ्गादित्याद्यन्यत्र विस्तरः। नन्वेवं कार्यस्य वियदादेः प्रागसत्त्वमेवेष्यताम्। कार्यताऽवच्छेदकलाघवात् किमभिव्यक्त्याख्याऽवस्थाकल्पनेन गौरवादिति चेत् "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिश्रुत्याऽव्यक्ताऽवस्थया सतामेव कार्याणामभिव्यक्तिसिद्धेः । न चैवमभिव्यक्तेः प्रागभावादिस्वीकारापत्तिः । तिसृणामनागताद्यवस्थानामन्योन्यस्याभावरूपत्वात्ताश्चावस्था घटाऽऽदेर्व्यतिरिक्ताः । तस्यावस्थात्रयवत्त्वानुभवात्। एवं च घटस्य वर्तमानावस्थैवाभिव्यक्तिः, तदभावश्च घटस्यानागताद्यवस्थैवेति दिक्। तत्र सूक्ष्मतया कारणेष्वविभागः कार्यस्यातीतावस्थाऽऽख्यो लयः । स यदात्यन्तिकस्तदा पुनर्लीनस्य नोपपत्तिरित्याद्यन्यत्र विस्तरः । एतत्सर्वकथनं कारणेनेश्वरेण कार्यस्याऽभेदसंपत्तये, तस्मिन्सत्येव ब्रह्मज्ञानात्सर्वज्ञानेन वैराग्यादनन्यभक्त्या भगवत्प्राप्तिसंभवादित्यास्तां विस्तरः ॥ ८ ॥

सच्चित्सत्यसुखाऽद्वयं सुविमलं ज्ञात्वा धिया निर्भिया
प्रेम्णि प्राप्तरसोऽभवद्भगवतस्तृप्ताऽन्त इत्थं मुनिः ॥
शाण्डिल्यः परमाऽनुरक्तिमधिपे संसूत्रयामास त-
द्व्याख्यातेन हरितुष्टये मुनिवरो नारायणाऽऽख्यो यतिः ॥ १ ॥

अधीत्य सर्वशास्त्राणि वासुदेवदयानिधेः ।
तीर्थश्रीरामगोविन्दकृपयैषा कृतिर्मम ॥ २ ॥

रामगोविन्दतीर्थानां गुरूणामन्वहं मम ।
तीर्थश्रीवासुदेवानां चरणौ शरणं सदा ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्यवर्यश्रीनारायणतीर्थकृतायां
भक्तिचन्द्रिकायां तृतीयाध्याये द्वितीयाह्निकम् ।

समाप्ता चेयं भक्तिचन्द्रिका ।



अथ श्री शाण्डिल्यमहर्षिप्रणीतानि भक्तिसूत्राणि ।

१ अथातो भक्तिजिज्ञासा ॥ १ ॥

२ सा परानुरक्तिरीश्वरे ॥ २ ॥

३ तत्संस्थस्यामृतत्वोपदेशात् ॥ ३ ॥

४ ज्ञानमितिचेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः ॥ ४ ॥

५ तयोपक्षयाच्च ॥ ५ ॥

६ द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः ॥ ६ ॥

७ न क्रिया कृत्यनपेक्षणाज्ज्ञानवत् ॥ ७ ॥

८ अत एव फलानन्त्यम् ॥ ८ ॥

९ तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत् ॥ ९ ॥

इति प्रथमाह्निकम् ।

---

अथ द्वितीयाह्निकम् ।

१० सा मुख्येतरापेक्षितत्वात् ॥ १ ॥

११ प्रकरणात् (१) ॥ २ ॥

१२ दर्शनफलमितिचेन्न तेन व्यवधानात् ॥ ३ ॥

१३ दृष्टत्वाच्च ॥ ४ ॥

१४ अत एव तदभावाद्वल्लवीनाम् ॥ ५ ॥

१५ भक्त्या जानातीति चेन्नाभिज्ञया साहाय्यात् (२) ॥ ६ ॥

---

अथ भाष्यकारधृतपाठयुतसूत्राणि—

१ प्रकरणाच्च । २ भक्त्या जानातीति चेन्नाऽभिज्ञप्त्या साहाय्यात् ।

१६ एतेन विकल्पोऽपि प्रत्युक्तः (१) ॥ ७ ॥

१७ देवभक्तिरितरस्मिन् साहचर्यात् ॥ ८ ॥

१८ भक्तिः प्रमेया श्रुतिभ्यः * ॥ ९ ॥

१९ पुराणेतिहासाभ्याश्चेति * ॥ १० ॥

२० पृथुध्रुवप्रह्लादाम्बरीषशुकसनकनारदभजनाचाराच्च * ॥ ११ ॥

२१ योगस्तूभयार्थमपेक्षणात् प्रयाजवत् ॥ १२ ॥

२२ गौण्या तु समाधिसिद्धिः ॥ १३ ॥

२३ हेया रागत्वादिति चेन्नोत्तमास्पदत्वात् सङ्गवत् ॥ १४ ॥

२४ तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात् ॥ १५ ॥

२५ प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः ॥ १६ ॥

२६ नैव श्रद्धा तु साधारण्यात् ॥ १७ ॥

२७ तस्यां तत्त्वे चानवस्थानात् ॥ १८ ॥

२८ ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यात् ॥ १९ ॥

इति द्वितीयाह्निकं प्रथमोऽध्यायश्च ।

---

## अथ द्वितीयाध्याये प्रथमाह्निकम् ।

२९ बुद्धिहेतुप्रवृत्तिराविशुद्धेरवघातवत् ॥ १ ॥

३० तदङ्गानां च ॥ २ ॥

३१ तामैश्वर्यपदां काश्यपः परत्वात् (२) ॥ ३ ॥

३२ आत्मैकपदां बादरायणः (३) ॥ ४ ॥

---

१ प्रागुक्तञ्च । ( इति सूत्रमस्मात्पूर्वमधिकम् ) । * इदं भाष्ये नास्ति ।

२ तामैश्वर्यपरां काश्यपः । ३ आत्मैकपरां बादरायणः ।

३३ उभयपदां शाण्डिल्यः शब्दोपपत्तिभ्याम् (१) ॥ ५ ॥

३४ वैषम्यादसिद्धमिति चेन्न प्रत्यभिज्ञावद्वैशिष्ट्यात् (२) ॥६॥

३५ न च क्लिष्टः परः स्यादनन्तरं विशेषात् ॥ ७ ॥

३६ ऐश्वर्यं तथेति चेन्न स्वाभाव्यात् ॥ ८ ॥

३७ अप्रतिषिद्धं परैश्वर्यं तद्भावाच्च नैवमितरेषाम् ॥ ९ ॥

३८ सर्वामृते किमिति चेन्नैवम्बुद्ध्यानन्त्यात् ॥ १० ॥

३९ प्रकृत्यन्तरालादवैकार्यं चित्सत्त्वेनानुवर्तनात् (३) ॥ ११ ॥

४० तत्प्रतिष्ठा गृहपीठवत् ॥ १२ ॥

४१ मिथोऽपेक्षणादुभयम् ॥ १३ ॥

४२ चैत्याचितोर्न तृतीयम् ॥ १४ ॥

४३ युक्तौ च सम्परायात् ॥ १५ ॥

४४ शक्तित्वान्नानृतं चेत्यम् (४) ॥ १६ ॥

४५ तत्परिशुद्धिश्च गम्या लोकवल्लिङ्गेभ्यः ॥ १७ ॥

४६ सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थ-प्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात् ॥ १८ ॥

४७ द्वेषादयस्तु नैवम् ॥ १९ ॥

४८ तद्वाक्यशेषात् प्रादुर्भावेष्वपि सा ॥ २० ॥

४९ जन्मकर्मविदश्चाजन्मने शब्दात् (५) ॥ २१ ॥

---

१ उभयपरां शाण्डिल्यः परत्वात् । २ वैषम्यादसिद्धमितिचेन्नाभिज्ञानवद-वैशिष्ट्यात् । ३ प्रकृत्यन्तरालादवैकार्यं चित्सत्त्वेनानुवर्तमानात् । ४ शक्तित्वान्नानृतं वेद्यम । ५ जन्मकर्मविदश्चाजन्मशब्दात् ।

५० तच्च दिव्यं स्वशक्तिमात्रोद्भवात् ॥ २२ ॥

५१ मुख्यं हि तस्य कारुण्यम (१) ॥ २३ ॥

५२ प्राणित्वान्न विभूतिषु ॥ २४ ॥

५३ द्यूतराजसेवयोः प्रतिषेधाच्च ॥ २५ ॥

५४ वासुदेवेऽपीति चेन्नाकारमात्रत्वात् ॥ २६ ॥

५५ प्रत्यभिज्ञानाच्च ॥ २७ ॥

५६ वृष्णिषु श्रैष्ठ्येन तत् ॥ २८ ॥

५७ एवं प्रसिद्धेषु च ॥ २९ ॥

इति द्वितीयाध्याये प्रथमाह्निकम् ।

---

अथ द्वितीयाध्याये द्वितीयाह्निकम् ।

५८ भक्त्या भजनोपसंहाराद्गौण्या परायै तद्धेतुत्वात् ॥ १ ॥

५९ रागार्थप्रकीर्तिसाहचर्याच्चेतरेषाम् ॥ २ ॥

६० अन्तराले तु शेषाः स्युरुपास्त्यादौ च काण्डत्वात् ॥ ३ ॥

६१ ताभ्यः पावित्र्यमुपक्रमात् ॥ ४ ॥

६२ तासु प्रधानयोगात् फलाधिक्यमेके ॥ ५ ॥

६३ नाम्नेति जैमिनिः सम्भवात् ॥ ६ ॥

६४ अप्रयोगाणां यथाकालसम्भवो गृहादिवत्(२) ॥ ७ ॥

६५ ईश्वरतुष्टेरेकोऽपि बली ॥ ८ ॥

६६ अबन्धोऽर्पणस्य मुखम् ॥ ९ ॥

---

१ मुख्यं तस्य हि कारुण्यम् । २ अत्राङ्गप्रयोगाणां यथाकालसंभवो गृहादिवत् ।

६७ ध्याननियमस्तु दृष्टसौकर्यात् ॥ १० ॥

६८ तद्यजिः पूजायामितरेषां नैवम् ॥ ११ ॥

६९ पादोदकं तु पाद्यमव्याप्तेः ॥ १२ ॥

७० स्वयमप्यर्पितं ग्राह्यमविशेषात् (१) ॥ १३ ॥

७१ निमित्तगुणाव्यपेक्षणादपराधेषु व्यवस्था ॥ १४ ॥

७२ पत्रादेर्दानमन्यथा हि वैशिष्ट्यम् ॥ १५ ॥

७३ सुकृतजत्वात् परहेतुभावाच्च क्रियासु श्रेयस्यः (२) ॥१६॥

७४ गौणत्रैविध्यमितरेण स्तुत्यर्थत्वात् साहचर्यम् (३) ॥१७॥

७५ बहिरन्तस्थमुभयमवेष्टिसववत् ॥ १८ ॥

७६ स्मृतिकीर्त्त्योः कथादेश्चार्तौ प्रायश्चित्तभावात् ॥ १९ ॥

७७ भूयसामननुष्ठितिरिति चेदाप्रयाणमुपसंहारान्महत्स्वपि॥२०॥

७८ लघ्वपि भक्तचधिकारे महत्क्षेपकमपरसर्वहानात् (४) ॥२१॥

७९ तत्स्थानत्वादनन्यधर्मः खलेवालीवत् ॥ २२ ॥

८० आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत् ॥ २३ ॥

८१ अतो ह्यविपक्वभावानामपि तल्लोके ॥ २४ ॥

८२ क्रमैकगत्युपपत्तेस्तु ॥ २५ ॥

८३ उत्क्रान्तिवाक्यशेषाच्च (५) ॥ २६ ॥

८४ महापातकिनां त्वार्तौ ॥ २७ ॥

---

१ स्वयमर्पितं ग्राह्यमविशेषात् । २ सुकृतजत्वात्परहेतुभावाच्च क्रियासु ताः श्रेयस्यः । ३ गौणं त्रैविध्यमितरेण स्तुत्यर्थत्वात्साहचर्यम् । ४ लघ्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात् । ५ उत्क्रान्तिस्मृतिवाक्यशेषाच्च ।

